# PREFACE

VENKATAKRISHNA DIKSHITA the author of this poem was a contemporary of Rama bhadra Dikshita and flourished at the Court of King Sahaji I of Tanjore 1684—1711 A D In the year 1693 King Sahaji founded a new village on the banks of the Cauvery near Kumbakonam named Sahaji rajapuram or Tiruvasalore and made a free gift of the same to several of the learned Pandits of his Court About forty five Pandits were thus rewarded and Venkatakrishna Dikshita was one of them He is the author of three other works besides this viz Sri Rama chandrodayakavyam Uttara Champu and Kusala vavijayanatakam In the last named drama the author speaks of himself as follows in the prelude —

अस्ति खलु समस्तजगत्प्रशस्ताभिजनशीलस्य वाधूलकुलजलधि कौस्तुभस्य विद्वज्जनश्लाघनीयस्य वेङ्कटाद्रिमहोपाध्यायस्य तृतीय ऋणापकरणकारणीभूतदेहपरिग्रहो मङ्गलाम्बिकागर्भशुक्तिमुक्तामणि-वेङ्कटकृष्णयज्वेति विख्यात कवि ॥

श्रीरङ्गपट्टणपतित्रिशिर पुरेश
चेञ्जीपुराधिपतितञ्जपुराधिनाथै ।
उच्चैर्यथोत्तरमुदञ्चितगौरवश्री
रास्त सुख शहजिराजपुरेऽधुनासौ ॥

धाल्येऽसौ निजतातपादनिकटादभ्यस्तसाङ्गश्रुति
सम्यक्शीलितकाव्यनाटकरसालकारभावक्रम ।

चक्रे काव्ययुग नटेशविजयश्रीरामचन्द्रोदया-

भिख्य सोत्तरचम्पु धीरपदसदर्भेऽस्य यत्र. कियान् ॥

From the above stanzas it is clear that Venkatakrishna Dikshita won his laurels not only at the Court of Tanjore but also at the Courts of Seringapatam, Trichinopoly and Chenji That he was held in high esteem by his contemporaries is evidenced by one of them viz, Viraraghavayajva speaking of him as follows

वेङ्कटकृष्णाध्वरिणि कविताप्रागल्भ्यमवगाह्य ।

आढौकत्त मनो मे प्रौढिं भवभूतिकालिदासादि ॥

The last stanza in each canto of this poem states that it was composed by one Gopala Bhupala But it was not so Gopala was one of the Governors deputed by Sivaji I to rule over a fort some four or five miles distant from Chidambaram Our author was born at a village named Pallakkacheri some twenty miles distant from South Arcot And before he attained fame at the courts of Seringapatam etc, he was a protegé of the said Gopala Bhupala teaching him how to compose poems (vide Stanza 49 Canto I) It was during this period that he wrote this kavya and attributed its authorship to his then benefactor Gopala Bhupala

Our thanks are due to Brahmasri T S Kuppuswamy Sastrigal of Tanjore who sent us the manuscript of this poem for publication

*T. K. Balasubrahmanyam.*

॥ श्रीः ॥

# ॥ नटेशविजयम् ॥



श्रियं कटाक्षाश्रिरमम्बिकाया-
स्तरङ्गयन्तूत्पलदामदीर्घाः ।
द्रुमेऽपि सद्यस्तिलकाभिधाने
प्रणीयते यैः प्रसवाङ्कुरश्रीः ॥ १ ॥

भद्राणि पुष्णातु स रामभद्रो
भद्राकृतिः स्वीकृतभद्रपीठः ।
कल्पद्रुमो यस्य करादुदारा-
दौदार्यमध्येतुमिवान्वगास्ते ॥ २ ॥

यस्यात्मनीनस्तनयोऽब्जयोनेः
पुरोहितोऽभूद्भगवान्वसिष्ठः ।
अरुन्धतीनाम्नि यदीयमास्ते
पतिव्रताज्योतिषि भागधेयम् ॥ ३ ॥

गाधेयगर्वोदधिकुम्भयोनि-
र्यद्ब्रह्मदण्डो यमिताखिलास्त्रः ।
ब्राह्मे बले क्षात्रबले च सारं
निरीक्षितॄणां निकषोपलोऽभूत् ॥ ४ ॥

गाधेः सुतः क्रूरतपोमहिम्ना
प्रसेदुषि ब्रह्मणि भाषमाणे ।
अपि द्विजोऽसीत्यवृणीत यस्य
तथाप्यनुज्ञां द्विजभावपूर्त्यै ॥ ५ ॥

यस्यान्वये योगिवरस्य शक्ति-
पराशरव्यासशुकप्रधानाः ।
संजज्ञिरे सर्वजगत्प्रसिद्धा
महर्षयोऽब्धौ मणयो यथाच्छाः ॥ ६ ॥

तस्यान्ववाये द्विजराज एकः
क्षीरोदधौ चन्द्र इवाधिकश्रीः ।
सौम्यः सतां वर्त्मनि संप्रवृत्तो
बालाजिनामाजनि पण्डितेन्द्रः ॥ ७ ॥

अजायतास्माद्दरणेरिवाग्नि-
र्दादाजिनामा तनयोऽव्ययतेजाः ।
विरोधिनोऽभ्येत्य विलोलहेतिं
चापल्यतो यं शलभीबभूवुः ॥ ८ ॥

उमाम्बिका नाम हुताशनस्य
स्वाहेव तस्याजनि धर्मपत्नी ।
अजीजनद्धर्ममिवात्तदेह
गोपालनामानमसौ कुमारम् ॥ ९ ॥

उमाकुमारोऽयमुदग्रशक्ति-
र्बाल्यात्प्रतिक्ष्माभृदुरोविभेत्ता ।
दादाजिनेतुस्तनयो महात्मा
बालेन्दुमौलेरिव बाहुलेयः ॥ १० ॥

गोपालभूपालवरस्य तस्य
गुणौघमाणिक्यखनि: कनीयान् ।
रामस्य सौमित्रिरिवातिमात्र-
प्रेमाश्रयो विठ्ठलपण्डितोऽभूत् ॥ ११ ॥

धर्मप्रतिष्ठापनतत्परस्य
तथाविधोऽक्रूरहितस्य तस्य ।
सखानघ: शंकरपण्डितोऽभू-
द्गाण्डीवधन्वेव गदाग्रजस्य ॥ १२ ॥

देवो द्विबाहुर्द्विजराजवंशे
गोपाल एवाजनि गोप्तुमाप्तान् ।
चापासिहस्त: स्वयमेष तस्मा-
दास्ते विमुक्तारिररोगदश्च ॥ १३ ॥

पुरा गृहीत्वा पृथुकान्कुचेलं
गोपाल एकं कृतवान्धनाढ्यम् ।
अद्य प्रवादच्युतयेऽनुपाधि
कुचेलसंघान्कुरुते कुबेरान् ॥ १४ ॥

शापे च चापे च स रैणुकेयः
शान्तौ च कान्तौ च स शारदेन्दुः ।
योगे च भोगे च स हैहयेन्द्रो
ज्ञाने च दाने च स चेद्दधीचिः ॥ १५ ॥

प्रत्यमकर्णः प्रतिपादनेऽसौ
सत्ये हरिश्चन्द्रनृपो नवीनः ।
वीरायिते नूतनविक्रमार्को
बोधे कलावान्नवभोजराजः ॥ १६ ॥

विरोधिसेनातृणवीतिहोत्रः
कवीश्वरस्तोमकलापिमेघः ।
समाश्रितव्रातचकोरचन्द्रः
स राजते सज्जनपद्मभानुः ॥ १७ ॥

स संचरिष्णुर्भुवि चापवेदो
दशाधिगम्यो द्विजभाग्ययोगः ।
दयारसः स्वीकृतदेहबन्धः
सचेतनः साम्बशिवप्रसादः ॥ १८ ॥

राज्ञः शिवच्छत्रपतेः प्रसादा-
त्प्राज्ञस्तदीयामवलम्ब्य मुद्राम् ।
चिदम्बरप्रान्तभुवं चिराय
गोपायति ब्रह्मकुलानुकूलः ॥ १९ ॥

बिभ्रद्धरित्रीभरमेष शेषं
भुजेन बुद्ध्याप्यधरीकरोति ।
सरोजलक्ष्मीं च सतामलक्ष्मीं
निजेक्षणेनैव निराकरोति ॥ २० ॥

नीलालकश्चन्द्रमुखोऽब्जनेत्रो
बिम्बाधरः कम्बुगलो द्विबाहुः ।
कवाटवक्षाः स गभीरनाभि-
र्महोरुजङ्घो मदनो नु मूर्तः ॥ २१ ॥

कान्त्या त्वदास्येन जितः कशीया-
निन्दुर्भवत्यन्वहमित्युद्न्द्रे ।
कर्णान्तिके कीर्तयतो धृतान्त-
श्छिद्रे नु मुक्ताच्छलतो मुदेऽस्य ॥ २२ ॥

हयाधिरोहोचितवेषभूषे
हसन्मुखेऽस्मिन्समरस्थवारे ।
हयेन खेलत्यधिराजमार्गे
दृष्ट्वा विमुह्यन्त्यबला द्विषश्च ॥ २३ ॥

विहारधाटीविततोरुघोटी
खुराग्रधूलीकुहनाभ्रपालिः ।
विरोधिबालाविपुलाश्रुमाला
नदीषु हेतुर्ननु तस्य नेतुः ॥ २४ ॥

दुरासदोऽन्यैर्धृतमण्डलाग्र
सोऽयं प्रतापेऽपरसूर्य एव ।
खमुत्पतन्खड्गहतोऽस्य शत्रु
र्भिन्ते पदं तद्गमतेऽर्कबिम्बम् ॥ २५ ॥

कराग्रखेलत्करवालमाया
कालाहिलीलाकवलीकृतेषु ।
प्राणानिलेषु प्रतिपक्षयूनां
मास्ते नरेन्द्रोऽयममोघमन्त्रः ॥ २६ ॥

अनेककाष्ठाक्रमणादजस्रं
जाज्वल्यमानाजयशालिनोऽस्य ।
प्रतापवह्नेर्भृशमुत्थिताभि-
र्नीलं नभोऽभून्नियतं मषीभिः ॥ २७ ॥

विसृत्वरैरस्य यशोवितानै-
राच्छादिते संततमिन्दुबिम्बे ।
चन्द्रोपलैर्ज्यौतिषिकाः कथंचि-
ज्जानन्ति पक्षौ निशि शुक्लकृष्णौ ॥ २८ ॥

स्वमन्दिराभ्यन्तरचत्वरेऽस्य
वदान्यभावे वितते विचित्रम् ।
कवीन्द्रवाहीकगृहाङ्गणानि
भवन्ति दानोदकपङ्किलानि ॥ २९ ॥

अनर्घकर्णाभरणाङ्गुलीय-
चित्राम्बरोर्णापसुकञ्चुकाद्यैः ।
अलंकृता यस्य सभान्तराले
दीव्यन्ति कल्पद्रुमवद्बुधेन्द्राः ॥ ३० ॥

यदीयविद्वज्जनयज्ञवाटी-
मांटीकमानेष्वमरेष्वजस्रम् ।
वियोगखिन्ना विबुधायताक्ष्यो
हन्तायनं दक्षिणमर्थयन्ते ॥ ३१ ॥

विद्वज्जनो यस्य विभोः सकाशा-
दासाद्य वर्षाशनमात्तहर्षः ।
आविष्करोत्यात्मनि चातकत्वं
दातुर्घनत्वं च दिगन्तरेषु ॥ ३२ ॥

वदान्यतामस्य कथं वदामः
कर्णाय दातुर्मणिकुण्डलस्य ।
कल्पद्रुमेऽपि स्ववशे वलारिः
कर्णं ययाचे मणिकुण्डलं यत् ॥ ३३ ॥

ख्यातिं गतो यः किल कुण्डलेन
बुधेन्द्रमेकं परितोष्य कर्णः ।
कथं न जिह्वेति स कुण्डलानि
दत्वामुना तोषयता बुधेन्द्रान् ॥ ३४ ॥

स कौशिकोऽजायत शक्तिहीनः
कर्णात्स्वयं कुण्डलमाददानः ।
वासिष्ठ एषोऽजनि वृद्धशक्तिः
कर्णेऽर्पयन्कुण्डलमाददानः ॥ ३५ ॥

देहीति दीनध्वनिकंधराय
दत्तामुना रत्नपुरे द्विजाय ।
प्राज्ञेन कार्तस्वरकण्ठभूषा
प्रभोस्तदात्मा प्रथिता तदादि ॥ ३६ ॥

विद्वन्मणिश्रेणिविराजमानै-
र्महीं परिष्कृत्य महामहारैः ।
ननु स्वयं नायकरत्नभूतो
विद्योतते ग्रामविवर्जितोऽसौ ॥ ३७ ॥

जिष्णुः शुचिर्दण्डधरः स पुण्य-
मनः प्रचेताः शुभगन्धवाहः ।
धनाधिनाथो द्विजराजमौलि-
राविष्करोत्यात्मनि दिक्पतित्वम् ॥ ३८ ॥

चिदम्बरे द्राक् शिवगङ्गयाद्भि-
यया जनानां ह्रियतेऽत्र पङ्कः ।
हन्तास्य तस्या अपि पङ्कहर्तु-
र्वयं कथं पावनतां वदामः ॥ ३९ ॥

कान्तेन साकं कलधौतशैले
विहारवार्ता हृदि विश्वमातुः ।
व्यावर्तितानेन विहारहेतो-
रान्दोलिकामर्पयताभिरूपाम् ॥ ४० ॥

सभेशसेवासमयानुशंसि-
न्यनेन दत्ते निनदत्यमन्दम् ।
घण्टामणौ मूर्ध्नि कृताञ्जलिः स्वे
लोके वसिष्ठं हि विलोकतेऽजः ॥ ४१ ॥

तस्यानुकूलाजनि धर्मपत्नी
सदाम्बिका नाम सतीमणिर्या ।
खनीव रत्नं कुलदीपमेन
खण्डोजिनामानमसूत सूनुम ॥ ४२ ॥

स्वप्ने तमेनं शिवकामसुन्द-
र्यासाद्य दिव्याभरणोज्ज्वलाङ्गी ।
चिदम्बरेशार्पितचित्तवृत्तिं
कदाचिदूचे करुणानुरूपम् ॥ ४३ ॥

वत्स प्रसन्नस्त्वयि विश्वनाथः
सुखी चिरं जीव शृणूदितं मे ।
सरस्वती श्रीरिव भूरिव त्वां
स्वयं शिवानुग्रहतो वृणीते ॥ ४४ ॥

सारस्वतं सारमिह प्रयुङ्क्ष्व
क्षुद्रेषु देवेष्वितरेष्विवैकः ।
स्वातीघनः शुक्तिपुटेष्विवान्यो
धन्यो महत्स्वेव तु दैवतेषु ॥ ४५ ॥

नव्यं तदेकं नटनायकस्य
प्रणीय काव्यं पुरुषार्थहेतुम् ।
रामस्य वाल्मीकिरिव त्रिलोक्या
माचन्द्रतारं यश आगृहाण ॥ ४६ ॥

तत्रान्तरे तालमृदङ्गतूर्य-
वीणारवैर्मागधरागभेदैः ।
प्रबोधितोऽसौ परदेवतायै
कृताञ्जलिः काल्यविधिं व्यतानीत् ॥ ४७ ॥

शिवार्चनानन्तरमेव सभ्या-
न्स्वप्रातुवादेन सभाजयित्वा ।
तेषामनुज्ञामधिगम्य धीमा-
न्काव्यं क्रमादारभतैष कर्तुम् ॥ ४८ ॥

विशुद्धवाधूलकुलाब्धिचन्द्रो
विद्वन्मणिर्वेङ्कटकृष्णयज्वा ।
गोपालनेतुः कवने विनेता
प्राचेतसस्येव पितामहोऽभूत् ॥ ४९ ॥

महाकवेर्वीक्ष्य कृतिं मनोज्ञां
पर्युत्सुकाः स्युः कवने परेऽपि ।
महेश्वरे नृत्यति मोदमानाः
पार्श्वे नटन्ति प्रमथा न किं वा ॥ ५० ॥

ख्यातिं किलैकेन गुणेन लोके
भजेत वस्तु प्रबलेऽपि दोषे ।
किं कालकूटे सति कौस्तुभेन
रत्नाकराख्यां लभते न सिन्धुः ॥ ५१ ॥

दृष्टेऽपि दोषे तदिह प्रबन्धे
गुणं बुधाः केवलमाद्रियध्वम् ।
दोषज्ञताया भवतां न हानि-
र्दोषैकदृक्त्वं परथा भवेद्वः ॥ ५२ ॥

कृतावधापि गुणः सुधीनां
कलङ्किनामादृतिरप्यवद्यम् ।
त्रयीतनोः पादहतापि पद्मि-
न्यामोदते नेन्दुकरादृतापि ॥ ५३ ॥

कृतमतिरिति सोऽयं काव्यनिर्माणबीजं
सुकृतिसुलभमन्तर्भिन्नतपक्षेय तत्त्वम् ।
व्यरचयदनवद्यं पद्यवर्गैः प्रबन्धं
बहिरपि पटुयोगीवाकरोद्दोकतन्त्रम् ॥ ५४ ॥

श्रीमद्वैदिकमार्गखेलनकलाशुद्धान्तरङ्गः सुधी-
रद्वैतामृतलाभनिर्भरनिजानन्दानुभूतिः सताम् ।
गोप्ता मेटकरीकुलैकतिलको गोपालभूपालकः
काव्येऽस्मिन्क्रमशो नटेशविजये सर्गं मुदाद्यं व्यधात् ॥

इति प्रथमः सर्गः ॥



# द्वितीयः सर्गः ॥



माध्यंदिनो नाम पुरा महर्षिः
   कृतारिषड्वर्गजयः किलासीत् ।
विभूतिरुद्राक्षविभूषिताङ्गं
   विशङ्कते यं विषमेषुरीशम् ॥ १ ॥

कदाचिदेष स्वकुमारमारा-
   दधीतसाङ्गश्रुतिमानमन्तम् ।
भवाब्धिपारं प्रतिलब्धुकामं
   शुचिं प्रसन्नः स्वयमित्युवाच ॥ २ ॥

वत्स त्वमेको मम वंशमध्ये
   सुवृत्तमुक्तामणिवत्सुजातः ।
शुद्धात्मनस्ते सुजनादृतस्य
   यशो गुणग्राहि सदा हृदासीम् ॥ ३ ॥

उद्गच्छतीन्दावुरुहर्षयोगा-
दुत्तानितैरूर्मिभुजैर्निशासु ।
उडूनि डिण्डीरमिषादुपात्ता-
न्युच्चावचान्यन्वहमुद्वहन्तम् ॥ ८ ॥

तरङ्गहस्ताञ्चलधूयमान-
प्रवालडोलाफलकाधिरूढम् ।
वृन्दं पयोमानुषदम्पतीनां
मुक्ताकलापैर्मुहुरञ्चयन्तम् ॥ ९ ॥

गर्वोद्धताम्भोगजवृन्दवप्रा-
घातक्षणोद्भूतघणात्कृतेन ।
संसूचयन्तं शतकोटिभीत्या
शैलानधस्तात्सलिले निमग्नान् ॥ १० ॥

तत्राथ दर्वीकरराजतल्पे
पयोमिलत्फेनसमूहकल्पे ।
शयानमिन्द्रोपलचारुदेहं
हिमाचलारूढमिवोदवाहम् ॥ ११ ॥

श्रिया सुधाशीतलया श्रितानां
तापं हरन्तं जनदर्शनीयम् ।
पुरः पुराणं पुरुषं वलारि-
श्चकोरकश्चन्द्रमिवालुलोके ॥ १६ ॥

प्रणम्य बद्धाञ्जलिसंपुटेन
सहस्रनेत्रेण सहानिमेषैः ।
तोष्ट्रूयमानोऽतुलदिव्यरूपो
दयालुरेनं दनुजारिरूचे ॥ १७ ॥

युष्माकमत्रागमनं यदर्थं
योगेन जानामि तदेतदद्य ।
वध्यो न ते वज्रकठोरकायः
स वाल्कलिः शक्र विना तपोभिः ॥ १८ ॥

शचीपतेऽतः शिवराजधानीं
तिल्वाटवीमेत्य तपश्चर त्वम् ।
तत्राहमेत्य त्वदनुग्रहार्थं
वत्स्यामि शैले वरदस्त्रिकूटे ॥ १९ ॥

इत्युक्तवन्तं पतिमिन्दिरायाः
प्रणम्य तेन प्रहितोऽथ शक्रः ।
तिन्त्राटवीमेत्य तपश्चचार
प्रसादहेतोः परमस्य पुंसः ॥ २० ॥

तपो वितन्वन्नुपतिम्नपत्नीं
पञ्चाग्निमध्ये प्रतितिष्ठति स्म ।
सदा. कथं साहसमन्तरेण
भद्राणि लोके पुरुषा भजेरन् ॥ २१ ॥

जातेऽम्बरे ऽभिवृद्ध वामुभक्तो
विष्णुं बलीयस्त्व इतीव मत्वा ।
नाकेश्वरोऽपि स्वयमीशनोऽमुं
नाथं बलीकर्तुमनात्ममेव ॥ २२ ॥

गुरूपदिष्टं पुनरेव कुर्व-
मनुष्ठानमध्यात्ममहादरेण ।
ददर्श वाचामपरं पुमांसं
गुरुप्रसादः किल कार्यसिद्धये ॥ २३ ॥

प्रसुप्तपङ्केरुहमण्डलस्य
प्रगे तटाकस्य पुरोऽर्यमेव ।
प्रमीलिताक्षिप्रकरस्य विष्णुः
प्रबोधकृत्प्रादुरभूद्रमेशः ॥ २४ ॥

श्रान्तोऽसि वज्रिन्सुचिरं तपोभि-
र्महेशितुस्त्वं मम च प्रसादात् ।
जहि द्विषं तं जयमाप्नुहीति
व्याहृत्य विष्णुर्विससर्ज जिष्णुम् ॥ २५ ॥

ततो विजित्य द्विषमाप राज्यं
शक्रो हरिस्तु स्वयमीशनाट्यम् ।
दिदृक्षुरास्तेऽहिशयोऽत्र तेन
त्वदिष्टलाभस्तपसात्र भावी ॥ २६ ॥

पुत्रैकदा पुल्कसजातिरेको
व्याधो वसन्विन्ध्यगिरिप्रदेशे ।
तीर्थाटनोत्साहजुषां द्विजानां
वसून्यसून्यप्यहरद्विशङ्कः ॥ २७ ॥

चन्द्रानना चम्पकदामगौरी
कुम्भस्तनी कुञ्जरगामिनीति ।
संभावयन्कामपि चर्मभस्त्रां
दुष्कर्म मूढस्तनुते तदर्थम् ॥ ३२ ॥

भार्याः सुता बन्धुजनाः परे च
यावद्धनं तावदुपासतेऽसुम् ।
वित्तेन हीनं तु विनैव हेतु-
मुत्सृज्य विश्वासमुदासते ते ॥ ३३ ॥

पापानि कृत्वा परिसंचितं स्वं
भुङ्क्ते गृहे बन्धुजनोऽस्य कामम् ।
भोक्तव्यमेकेन परत्र लोके
स्वेनैव पापस्य फलं तु शश्वत् ॥ ३४ ॥

तत्कर्म कुर्वन्नतिदारुणं त्वं
कदापि धर्मस्य कथां न वेत्सि ।
करेण पाशं कलयन्कृतान्तः
समागतश्चेत्तव कः सहायः ॥ ३५ ॥

मध्याह्नकाले मकरन्दनद्याः
पूरे विहृत्य प्रमदेन यत्र ।
पुलिन्दबालाः पुनरेव सायं
परागपालीपुलिने लुठन्ति ॥ ४० ॥

सर्वत्र शाखाच्छदपुष्पपूर्णाः
फलन्त्यजीर्णा द्रुलताः स्वकाले ।
चिरंतनो यत्र तु चित्रमेकः
स्थाणुः सदैका च फलत्यपर्णा ॥ ४१ ॥

विद्याधरा यत्र विलासिनीभिः
समं लतासद्मसु सानुरागाः ।
संगीतविद्यारसिका रमन्ते
निर्वेशिनः कीचकनादभेदैः ॥ ४२ ॥

पञ्चानना यत्र शिवापरीता
गजारयो यद्गुहाभिलाषाः ।
भीमाः शरच्चीरदगौरदेहाः
सटाभिरामाः सततं वसन्ति ॥ ४३ ॥

बिल्वीदलैरेष बिसप्रसूनै-
जातीसरैश्चम्पकदामभिश्च ।
संपूजयन्साम्बशिवं व्यनैषी-
दनेहसं कंचिदखण्डभक्तिः ॥ ४८ ॥

आहर्तुकामः कुसुमं हिमानी-
करालिते कण्टकिते वनेऽसौ ।
निःशङ्कसंचारकृते निशासु
व्याघ्राङ्घ्रिभावं वरमाप शंभोः ॥ ४९ ॥

सितेतरग्रीवमुमासहायं
त्रिलोचनं दिव्यतनुं युवानम् ।
स्मेराननं चन्द्रकलावतंसं
ध्यायन्नयं देववरं स धन्यः ॥ ५० ॥

मौञ्जीधरोऽयं मृगचर्मवासाः
शुभ्रोपवीतः सुपलाशदण्डः ।
भालोल्लसद्भास्मनयिन्दुरासी-
न्मुनेः सुतो मूर्त इवाश्रमोऽद्यः ॥ ५१ ॥

सा व्याघ्रपादं समुपाश्रयन्ती
नगप्रकाण्ड नवमल्लिकेव ।
काले नवं गुच्छमिवाच्छकान्ति-
र्बभार गर्भं भुवनाभिनन्द्यम् ॥ ५६ ॥

कलेव चन्द्रस्य तदा कृशाङ्गी
कान्त्याः प्रपूरैर्ववृधेऽन्वहं च ।
वराहदंष्ट्रेव विपाण्डुवर्णा
वसुंधरासक्तिमती च साभूत् ॥ ५७ ॥

हठात्स्वमाक्रान्तवतोरिदानीं
कार्ष्ण्यं मुखेऽभूत्कुचयोरतीव ।
आकर्ण्य मध्यं तदवेक्षितुं द्रा-
क्स्वयं बहिः प्रादुरभूत्सुकेश्याः ॥ ५८ ॥

पदे पदे ग्लायति बाहुवल्ली-
मंसे मखीनामबला निधत्ते ।
निरन्तरं निःश्वसितीति वार्ता
कर्णे सुधां तत्कमितुर्न्यषिञ्चन् ॥ ५९ ॥

विक्षोभ्यमाणेव पयोधिवेणी
निर्मथ्यमानेव निदारणी सा ।
कान्तामणिः कुंधनखिद्यमाना
तेजोमयं दिव्यमसूत सूनुम् ॥ ६० ॥

वसिष्ठमुख्या मुनयः समेत्य
वैयाघ्रपादिं दिवसे शुभंयौ ।
आमन्त्रयन्नान्वयमागमज्ञं
मोदादकुर्वन्नुपमन्युसंज्ञम् ॥ ६१ ॥

आजानशुद्धैः सुरभेः पयोभि-
र्मूर्तैः स्वयं सत्त्वगुणैरिवामुम् ।
कृतोदयं मातुलगेहसीम-
न्यरुन्धती वर्धयति स्म हर्षात् ॥ ६२ ॥

माध्यंदिनिस्तदनु मातुलगेहमध्या-
द्वेदोक्तकर्मविहितातिशयं कुमारम् ।
वैतानपावकमिवाध्वरवेदिमध्या-
दादाय तिल्ववनमाप मुदा सदारः ॥ ६३ ॥

मुग्धं वन्याहारवैरस्ययोगा-
दुग्धं स्मारं स्मारमेनं रुदन्तम् ।
आराम्नीतं वीक्ष्य पित्रा ह्रोऽस्मै
क्षीराब्धिं द्रागानयद्दीनबन्धुः ॥ ६४ ॥

पुनरपि सह पत्न्या पुण्यकृद्व्याघ्रपादो
नटपरिवृढदिव्यानन्दनाट्यं दिदृक्षुः ।
अतनुत शिवपूजामादरादाम्नवाचा
परमसरसपतञ्जल्यागमैकप्रतीक्षः ॥ ६५ ॥

श्रीमद्वैदिकमार्गखेलनकलाशुद्धान्तरङ्गः सुधी-
रद्वैतामृतलाभनिर्भरनिजानन्दानुभूतिः सताम् ।
गोप्ता मेटकरीकुलैकतिलको गोपालभूपालकः
काव्येऽस्मिन्क्रमशो नटेशविजये सर्गं द्वितीयं व्यधात् ॥

इति द्वितीयः सर्गः ॥

———— ❀ ————

# तृतीयः सर्गः ॥



कैलासशैलमधिगम्य कदाचिदारा-
न्नारायणः सविनयं प्रणमञ्छिवेन ।
आलिङ्ग्य गाढमभिनन्द्य च भद्रपीठे
पार्श्वे विचित्रमणिभासिनि वेशितोऽभूत् ॥ १ ॥

तत्र क्षणं तरलवेत्रलताविलास-
व्याख्याततत्सदधिकारविशेषयोगः ।
प्रस्थापयन्दिगधिपान्प्रभवे निवेद्य
त्रैलोक्यभारभृददृश्यत तेन भृङ्गी ॥ २ ॥

रोमन्थलोलगलकम्पललम्बिघण्टं
कण्ठक्वणत्कनककिङ्किणिकाकलापम् ।
चन्द्रांशुगौरचलचामरचारुशृङ्ग-
माक्षावचकार धुरि शाक्वरराजमेषः ॥ ३ ॥

द्वैमातुरोदरफणाधरपारणोत्क
षाण्मातुरीयरथसंभृतवल्गितानि ।
आलोक्य किंचिदवलम्बितमन्दहासा-
मम्बामपश्यदपि सादरमम्बुजाक्षः ॥ ४ ॥

तावत्समुद्र इव शान्ततरङ्गघोषे
मार्दङ्गिकस्तिमितमर्दलतालगीते ।
सर्वेशयोः सदसि संलपतोर्मुहूर्तं
चित्रार्पिता इव बभुः सनकादिसिद्धाः ॥ ५ ॥

प्रालेयशैलतनयापरिकर्मितस्व-
देहोक्तविश्वजननीजनकैकयोगः ।
भालेक्षणोऽब्जनयनेन मिथः प्रजल्प्य
प्रस्थाप्य संसदमनेन सह प्रतस्थे ॥ ६ ॥

विश्रान्तिशायिसुपमोदयवीक्षणीयौ
दाम्पत्यदर्शितमिथःप्रणयानुबन्धौ ।
आसेदतुः स्वयमनीश्वरवादिजुष्टं
तौ देवदारुवनसीमितदुष्टशिक्षौ ॥ ७ ॥

कन्दर्पकोटिकमनीयतनु कपाली
मन्दस्मिताङ्कुरमनोहरगण्डभाग ।
कुन्दप्रसूनरदन कुमुदाप्तचूडो
नन्दद्गणो वनमगाहत नग्नटश ॥ ८ ॥

भस्मानुलेपपरिधूसरपाण्डुराङ्गा
विस्मापितामरपुरन्ध्रिविकीर्णपुष्प ।
दक्षाधिभूगतिकृदारकुमारवेषो
भिक्षाटनाय सुरदारुवन स भेजे ॥ ९ ॥

मञ्जीरचक्रमुखर मणिपादुकाङ्क
पुञ्जीभवन्नखरुचि प्रणिधाय पादम् ।
मत्तानतानगतिकृद्धतमुग्धदक्ष
स्तत्तादृश व्यतनु ताण्डवमिन्दुमौलि ॥ १० ॥

तावत्तपस्विनकणीपरिपत्तमेन
मत्याङ्कुराकृतिमवेक्षितुमादरेण ।
स्वस्वाश्रमाभिरजिहीत सुवर्णवर्णा
सौदामिनीततिरिवाम्बुदपङ्क्तिभागा ॥ ११ ॥

एका विनिर्गतवती निजयज्ञवाटा-
त्पत्नी नितम्बपरिमण्डलबद्धयोक्त्रा ।
संनह्य पुष्पधनुषा सहसेव कृष्टा
दृष्टान्तिके चिरमतिष्ठत हन्त तस्मै ॥ १२ ॥

अन्या तदीयमुखमण्डलमादरेण
धन्या सुधाकरमिवाखिलदर्शनीयम् ।
इन्दीवरेण सरसीव निजेक्षणेन
मन्दीभवन्मुकुलनेन मुहुः सिषेवे ॥ १३ ॥

साकूतमन्दहसितेन शशाङ्कमौलेः
काकूदितेन च करार्पितपारवश्या ।
दुग्धान्नमित्युपहृतं नवनीतमेका
स्निग्धात्मकं स्वमिव चित्तमदादमुष्मै ॥ १४ ॥

मारप्रवीरविशिखैरिव मुच्यमानैः
केशप्रकीर्णकुसुमैरनुगम्यमाना ।
कामारिमेत्य लघु काप्यवदत्सुभक्ता
भक्तानुरक्त भगवन्नवलोकयेति ॥ १५ ॥

मत्तेभकुम्भतटमर्दनलब्धवर्णाः
  पञ्चाननस्य नखरा इति नः प्रसिद्धम् ।
तन्मेऽद्य दर्शय वने दयया दिदृक्षोः
  कुम्भस्तनी तमिति गूढमुवाच काचित् ॥ १६ ॥

प्रस्वेदवारिकणिकापरिशोभिभालं
  श्वासातिरेकदरजल्पितचारुवक्त्रम् ।
नाट्यं झलंझलितनूपुरमुद्धत त्वं
  कान्तया कृतं कुरु मयेति तमाह काचित् ॥१७॥

शश्वत्प्रतार्य सुदतीजनमर्जितं य-
  त्पाप तदेव हि गलं परिवेष्टते ते ।
क्ष्वेलच्छलात्कृतमतः परवञ्चनेन
  स्वामिन्दयस्व मयि माधिवलि काचिदूचे ॥१८॥

मुग्धा मुहूर्तमवलोक्य शिवं प्रमोदा-
  त्काचित्परित्रुटितकञ्चुककङ्कणालि ।
श्वश्रूभिया तमुपसृत्य सकङ्कणं मे
  दत्त्वाशु कञ्चुकमितः प्रचलेत्यरौत्सीत् ॥ १९ ॥

आदाय कापि मणिदर्विकयान्नमुष्टैः
पात्रे समर्पयितुमुन्नमिताङ्गयष्टिः ।
तावत्समुच्छ्वसितनीविदुकूलमाशु
ह्रीणा करेण दधती हृषितावतस्थे ॥ २० ॥

वाचालकिङ्किणिविजृम्भितहृद्यढक्का-
वाद्यध्वनिस्मितविकासिमुखेन्दुगर्भौ ।
वल्गत्युदारमिति वामदृशां तदीयं
मञ्जीरचक्रयुगलं निगलं हृदोऽभूत् ॥ २१ ॥

अत्रान्तरे मरयमाश्रमदेशगामा
नारायणी नवनवोदितयौवनश्रीः ।
कादम्बिनीसविधकन्दलितेव शम्पा
पर्याकुलं परमहंसकुलं वितेने ॥ २२ ॥

ताटङ्करत्नतरलांशुनिचोलचञ्च-
द्व्यानद्धगण्डमुकुरव्यतिरोचमाना ।
नालीकदीर्घनयनाञ्चलकज्जलश्री-
व्याख्यातमारविषदिग्धशरप्रकारा ॥ २३ ॥

धम्मिल्लमध्यगतचम्पकदामगन्ध-
मोमुह्यमानयुवमानसमत्तभृङ्गा ।
भालामृतांशुशकलोपरिभासमान
कस्तूरिकातिलककन्दलिताङ्कशङ्का ॥ २४ ॥

नासाञ्चलाभरणमौक्तिकनामधेय-
नक्षत्रनिम्नकृतचन्द्रजिदास्यदास्या ।
आपाटलाधरदलार्चिरुदारसंध्या-
रागानुबन्धिरदनावलिबालचन्द्रा ॥ २५ ॥

माणिक्यहेममयमङ्गलसूत्रलक्ष्मी-
संदर्शितस्मरहरिज्जयतोरणश्रीः ।
कामेशदर्शनकुतूहलियौवनश्री-
गानीतपूर्णकलशाभकुचाभिरामा ॥ २६ ॥

कौसुम्भकञ्चुकविराजिकुचाग्रदिग्ध-
स्काश्मीरजन्मरमकर्बुरतारहारा ।
संध्यारुचिच्छुरितशैलतटान्तरुच-
त्तारावलीरुचिरदिक्तरुणीविलासा ॥ २७ ॥

नाभीगभीरसरसीसरसोजिहान-
नालाभरोमलतिकाप्रलसत्कुचाब्जा ।
चञ्चद्भुजायुगलचम्पकदामकोटि-
व्यालम्बिकोकनदविभ्रमकारिहस्ता ॥ २८ ॥

लावण्यसिन्धुलहरीपुलिनानुकारि-
श्रोणीविहारिविहगावलिचारुकाञ्चिः ।
अब्जोपरिस्फुरदधोमुखहेमरम्भा-
संभावनार्हचरणोज्ज्वलजङ्घिकोरुः ॥ २९ ॥

मञ्जीरमञ्जुरवसंजनितस्वशङ्का-
संप्राप्तहंसगलहस्तिकचारुयाना ।
आलोहिताम्बरसमुल्लसदङ्गवल्ली-
संभाविताभिनवचन्द्रकलाविलासा ॥ ३० ॥

नीलोत्पलद्वितयनिर्गतमत्तभृङ्गी-
भङ्गीवहस्फुटकटाक्षपरंपराभिः ।
निःशेषपीतनियतव्रतयोगबृन्द-
हृत्पङ्कजोदितविवेकमरन्दबिन्दुः ॥ ३१ ॥

किंचिच्च्युतं कुचदुकूलमुरस्युदारं
प्रत्यर्पयन्त्यनुकलं करपल्लवेन ।
आदाय घर्मकणिकामलिकात्किरन्ती
सौन्दर्यबिन्दुमिव शोणरुचा नखेन ॥ ३२ ॥

वामेन विश्लथतरां कवरीं करेण
काञ्चीं नितम्बगलितामितरेण धृत्वा ।
मूले क्वचिद्विटपिनो मुहुरध्वखेदा-
त्तिष्ठन्त्यमूमुद्दशेषजगत्कृशाङ्गी ॥ ३३ ॥

लीलाविघूर्णितविलोचनकोणपातै-
र्हालाहलैरिव जनानतिमोहयन्ती ।
नीलालकान्तिकविलोलललन्तिकैका
बाला परिभ्रमति काननसीम्नि कैषा ॥ ३४ ॥

गाढानुरागकलशोदधिचन्द्रिका वा
शृङ्गारसौधशिखरार्पितदीपिका वा ।
मारैन्द्रजालिकविमोहनपिञ्छिका वा
लीलाभिरामरतिपञ्जरशारिका वा ॥ ३५ ॥

राकासुधाकिरणमण्डलरम्यवक्त्रा
तारावलीसदृशताद्दशतारहारा ।
शोणाधराचिरधरीकृतसांध्यरागा
श्यामा प्रपञ्चयति पञ्चशरप्रतापम् ॥ ३६ ॥

आः पश्यतामभिनवस्मितचन्द्रिकाभि-
र्हृत्वा बहिस्तिमिरमन्तरिवार्पयन्ती ।
जाज्वल्यमाननखशोणमयूखजालैः
पार्श्वद्रुमान्सपदि पल्लवितान्करोति ॥ ३७ ॥

मोघेतरा कदनकर्मणि मुष्टिमेय-
मध्येयमेव मकरध्वजचापयष्टिः ।
आद्यन्तयोर्यदरविन्दमथोत्पलं च
धत्ते पदेक्षणमिषेण तदीयमस्त्रम् ॥ ३८ ॥

आलानमुज्ज्वलितमारुरुचे त्रिधोच्चै-
राकृष्यताद्रितटमायसशृङ्खला च ।
कामद्विपेन तदिदं कुचयोरधस्ता-
द्रोमावली त्रिवलिनाभिखनीति दृष्टम् ॥ ३९

पञ्चेषुमुक्तपटुबाणपरम्पराया-
न्छिद्राणि योगिनिवहैश्चिरमर्पितानि ।
चित्तान्युरोजयुगले सुगुणानि शुद्धा-
न्यस्या लुठन्ति नवहारमणिच्छलेन ॥ ४० ॥

उद्यद्भुजद्वितयमुद्यतबाहुमूल-
मुत्तम्भितस्तनमुदारविलोलहारम् ।
उन्नम्रमध्यमुपवेल्लितपादमस्या
उज्जृम्भितं जयति हुकृतयोगिधैर्यम् ॥ ४१ ॥

इत्थं विभाव्य धुरि योगिजनश्चिरं तां
मोहानिलव्यतिकरास्तविवेकदीपः ।
स्नानं जपं हवनमध्ययनं पुराणं
शास्त्रं व्रतं च सकलं विजहौ किमन्यत् ॥४२॥

पुङ्खानुपुङ्खशरवर्षुकपुष्पचापे
कोलाहलप्रवणकोकिलयूनि काले ।
अत्यद्भुताकृतिरसौ विपिने चरन्ती
हा हन्त हन्त जगदात्मवशीचकार ॥ ४३ ॥

तां सुन्दरीं प्रति तपस्विजनेऽनुरक्ते
तं सुन्दरं प्रति तदीयवधूजने च ।
जातक्रुधः कतिपये जरठास्तदानी-
मुद्दिश्य शंभुमभिचारमुपाक्रमन्त ॥ ४४ ॥

तस्माद्भूत्प्रथममुग्रतरस्तरक्षुः
संप्रेरितो मुनिभिरेत्य शिवं जिघांसुः ।
तच्छूलकोटिदलितस्वकठोरदेहः
प्राप त्वचा सपदि तत्परिधानभावम् ॥ ४५ ।

भूयोऽपि ते भुजगमेकमुदीतमन्त्रैः
कालं करालगरलाग्निभरं किरन्तम् ।
प्राचोदयञ्जहि पिनाकिनमित्यथैनं
केयूरयन्भुजगमेव कृती स चक्रे ॥ ४६ ॥

भूतं पुनर्भुवनभीषणमेकमग्रे-
रुद्भूतमुत्तरललोचनमुग्रदंष्ट्रम् ।
शंभोर्वधाय ससृजुर्मुनयस्तमीशो
न्यञ्चन्निपात्य विदधे निजपादपीठम् ॥ ४७ ॥

अग्निं तमेव पुनराकुलकीलजालं
तेऽचोदयन्नथ तमप्युपनम्रमाशु ।
किञ्जल्कपिञ्जरितकोकनदाविशेषं
हस्ते वहन्व्यहरदद्भुतशक्तिरीशः ॥ ४८ ॥

मूर्तान्पुनर्जडधियो मुनयः समन्त्रा-
नाहूय हन्तुमदधुः शिवमभ्यनुज्ञाम् ।
तानागतानपि तदा स विधाय शक्त्या
माणिक्यनूपुरमयानधृताङ्घ्रियुग्मे ॥ ४९ ॥

इत्थं हतोद्यममवेक्ष्य तपस्विसङ्घ
घोराट्टहासदलिताण्डकटाहकूटः ।
भीमाकृतिर्भ्रमितपिङ्गजटोऽथ कोपा-
दत्युग्रताण्डवपरोऽभवदष्टमूर्तिः ॥ ५० ॥

तस्मादृशं तमवलोक्य महर्षिवृन्दं
निश्चेष्टितं भुवि निलीनमभूद्भयार्तम् ।
तादृक्षवेगधुतपक्षतिमक्षिकोणै-
रालक्ष्य तार्क्ष्यमहिवृन्दमिवान्तरिक्षे ॥ ५१ ॥

विश्वातिशायिनि जने विहितोऽभिचारो
न व्यर्थ एव ननु कर्तुरनर्थहेतुः ।
उद्दिश्य भानुमुपलः प्रहितः किलोर्ध्वं
क्षेप्तुः शिरो विदलयेत्क्षणतो निपत्य ॥ ५२ ॥

तद्देवदारुवनतापसबृन्दमेवं
मूर्च्छालमाकलयतो मदनान्तकस्य
वज्रारवव्यथितचातकमण्डलस्य
धारेव मङ्क्षु जलदस्य दयाविरासीत् ॥ ५३ ॥

कर्पूरगौरतनुरिन्दुकलावतंसः
स्मेराननः शिखरिराजसुतासमेतः ।
आलोलपिङ्गलजटापटलोऽथ तेषा-
मानन्दताण्डवमदर्शयदन्तकारिः ॥ ५४ ॥

आनन्दबाष्पभरितायतलोचनाना-
माविर्भवत्पुलकमेदुरिताङ्गकानाम् ।
आधूयमानशिरसां द्रुतमाविरासी-
दानन्दताण्डवरसानुभवो मुनीनाम् ॥ ५५ ॥

पश्चाज्जगत्पतिमिमं प्रतिबुध्य पश्चा-
त्तापात्प्रणम्य मुहुरेत्य शिवप्रसादम् ।
अन्तर्हिते सति महाम्बुजलोचनेऽस्मि-
न्सर्वे तदादि समुपासत साम्बमेनम् ॥ ५६ ॥

आनन्दनाट्यमनुभूतमिदं कदाचि-
द्दुग्धोदधौ स्मृतवता दनुजान्तकेन ।
हर्षप्रकर्षभरितेन महाभरार्तः
पृच्छन्नभाणि फणिराट्किल भारहेतुम् ॥ ५७ ॥

पूर्वं मया यदनुभूतमभूत्पुरारे-
र्नृत्तं तदेतदनुसंदधतोऽधुना मे ।
आनन्दसिन्धुलहरीमतिवेलमन्त-
रासेदुषो वहनतोऽजनि तेऽतिभारः ॥ ५८ ॥

तस्यैव जन्म सफलं भुवने स एव
श्लाघ्यः स एव तरति त्वरितं भवाब्धिम् ।
आनन्दताण्डवरसं हरिणाङ्कमौले-
र्धन्यः स्वयं पिबति यः किल दृक्पुटाभ्याम् ॥

आकर्ण्य मद्गिरमिमामहिराज तेऽक्षी-
ण्यानन्दबाष्पभरितान्यधुना भवन्तम् ।
शंसन्ति शंभुनटनेक्षणसाभिलाषं
धन्योऽसि सेत्स्यति च तेऽभिमतं तदेतत् ॥

मामाश्रितस्य फणिनायक ते महान्तं
कालं मयाद्य कथितं परमं रहस्यम् ।
तद्गच्छ तावकसुतोऽस्तु मदीयतल्पं
त्वं द्रक्ष्यसि त्रिनयनं तपसे यतस्व ॥ ६१ ॥

संचोदयन्तमिति चक्रधरं प्रणम्य
क्षीराम्बुधेः स निरगादुरगाधिराजः ।
कैलासभूधरमुपेत्य कृतान्तहन्तुः
प्रीत्यै तपश्चिरमतप्यत चाप्रमत्तः ॥ ६२ ॥

वाताशनत्वमनिशं वसतिर्गुहायां
शेषस्त्वचः सततसंकुचितिश्च भोगे ।
सर्पस्वभाव इति सर्वमिदं विहाय
पञ्चाग्निमध्यमभजत्फणिराडनश्नन् ॥ ६३ ॥

दर्वीकराधिपतिना तपसातिमात्रं
संप्रीणितस्तदनु चन्द्रकलावतंसः ।
आविर्बभूव तमभाषत चाथ वत्स
संपत्स्यते सपदि तेऽभिमतार्थसिद्धिः ॥ ६४ ॥

तिल्वाटवीं भज तपश्चर तत्र चाहं
श्रीमूलनाथसदनं समया विराजः ।
हृत्पुण्डरीककुहरे धरणीसुषुम्णा-
नाडीपदे सदसि दर्शयितास्मि नाट्यम् ॥ ६५ ॥

अत्रेः पुरा त्वमभवस्तनयोऽनसूया
त्वामञ्जलौ धृतमवेक्ष्य भुजङ्गरूपम् ।
त्रासादपातयदतोऽजनि ते पतञ्ज-
ल्याख्ययाधुनापि भव तादृशनामरूपः ॥ ६६ ॥

उपदिशति पिनाकिन्येवमुन्निद्ररोमा
विरचितनतिरन्तर्विस्तृतानन्दसिन्धुः ।
कृततुतिरसुमत्या कुण्डलीशः पुरारे-
रभजत निजलोकं हर्पिताशेपलोकः ॥ ६७ ॥

श्रीमद्वैदिकमार्गखेलनकलाशुद्धान्तरङ्गः सुधी-
रद्वैतामृतलाभनिर्भरनिजानन्दानुभूतिः सताम् ।
गोप्ता भेटकरीकुलैकतिलको गोपालभूपालकः
काव्येऽस्मिन्क्रमशो नटेशविजये सर्गं तृतीयं व्यधात् ।

इति तृतीयः सर्गः ॥



## चतुर्थः सर्गः ॥



अथ पतञ्जलिरन्तकहन्तरि
स्थिरमतिस्तपसे धृतनिश्चय ।
अनुमत स्वजनैरधिक दया-
मृदुरगादुरगालयतो बहिः ॥ १ ॥

बिलमुखादुदित स पिकारवै-
र्हृयदिव स्वमुदैक्षत काननम् ।
चलकराङ्गुलि चारुमरुल्लल
त्तपनतापनतारुणपल्लवम् ॥ २ ॥

सकलभं फलभङ्गुरभरट-
च्छुकपिकं कपिकम्पितभूरुहम् ।
वरसमीरसमीरितवल्लरी-
निकरमाकरमासददाशिषाम् ॥ ३ ॥

परिवृढ. फणिनामथ पावने
महति तिल्ववनेऽत्र महात्मनः ।
प्रमुदितानकृत प्रणतः स्वयं
मुनिजनान्निजनाम्न उदीरणात् ॥ ४ ॥

क्वचन तत्र तरक्षुपदक्षर-
न्कुसुमपत्रकुले तमुदैक्षत ।
फणिपतिं बहुकालदिदृक्षितं
भसितभासितभावुकविग्रहम् ॥ ५ ॥

तमभिवाद्य मुनि. स तरक्षुपा-
दनयदाशु निजाश्रममादरात् ।
अपि च तस्य शिवेऽर्पितचेतसो
निजगृहे जगृहे चरणोदकम् ॥ ६ ॥

परिणतैरधुनाजनि मे चिरा-
त्पितृपितामहपुण्यभरैर्ध्रुवम् ।
सकलवाञ्छितसंघटनाय य-
त्पभवता भवतास्मि समागतः ॥ ७ ॥

रजनिषु द्विजराज उदित्वर
स हरते बहिरेव तम शनै ।
अनिशमन्तरपीदमर त्वया
शकलित कलित द्विजराज न ॥ ८ ॥

भगवता सुकर भुवि मादृशा
प्रणमता दुरिताङ्कुरभञ्जनम् ।
प्रयतते खलु भद्रतराकृति-
र्वनकरी न करीरविपाटने ॥ ९ ॥

उपचरन्मुनिरेप तदादरा-
दुरगपुङ्गवमप्यमुना स्वयम् ।
समधिक विनुत सुखदु खयो-
रुपचयापचयावुपसेदिवान् ॥ १० ॥

इति परस्परमीरितवैभवा-
वुपचितप्रमदावुभकौ मुनी ।
गिरिशताण्डवदर्शनसत्वरा-
वभवता भवतान्तहृदौ चिरात् ॥ ११ ॥

विधिवदर्चनया व्रतचर्यया
नुतिगिरा तपसा नतिकर्मणा ।
उपचचार मुनिद्वयमुत्सुकै
रिह वने हवनेन च शंकरम् ॥ १२ ॥

अथ कदाचन नाट्यमुमापते-
रचिरभावि विचार्य किलाभवत् ।
उषसि रञ्जयितुं रविरुत्सुकः
किरणतोरणतो गगनाङ्गणम् ॥ १३ ॥

सुरतविह्वलिता सुचिरं वधू-
रुपपतेरुरसि स्वपती तदा ।
कलकलैः कृकवाकुगलोद्गतै-
र्द्रुतरसा तरसा समबुध्यत ॥ १४ ॥

मुनिकुमारकृताध्ययनारवै-
र्मुखरितासु दिशासु विनिद्रितम् ।
विचरति स्म पयोजवने मिथः
सकलहं कलहंसकुलं तदा ॥ १५ ॥

अनुकृत क्षणमम्बुजमेचको
हरिरहीश्वरतल्पशयोऽम्बुधौ।
सरसि षट्चरणेन समुच्छ्वस-
त्कमलकोमलकोटरशायिना ॥ १६ ॥

भ्रमरडिम्भमुपात्तरवं प्रगे
मरुदुपाहृतमादृत पद्मिनी।
प्रदिशती मकरन्दपय' स्वयं
निजपयोजपयोधरत स्नुतम् ॥ १७ ॥

उदितमिन्दुकलाशतमीक्ष्यतां
क्षितिभृतीति सखीभिरुदीरिते।
स्तनपटेन नखक्षतयोऽरुणा
रुरुधिरे रुधिरेण नवोढया ॥ १८ ॥

रविशताङ्गरथाङ्गजवोत्थर-
त्प्रथमभूधरगैरिकपुञ्जवत्।
फणिभुगग्रभुव. स्फुटसुद्ययौ
रुचिरमर्चिरमर्त्यपथे पुरः ॥ १९ ॥

अरुणरोचिरसृक्परिमुञ्चती
तिमिरदन्तिघटोषसि वायुना ।
प्रचलितानुदिशं पटलीभव-
द्भ्रमरतोमरतोदवशादिव ॥ २० ॥

मघवदिङ्मुखमण्डनकुण्डल-
भ्रमकराकृति बिम्बमहर्पतेः ।
उदधिमध्यगविद्रुमवीरुधा-
मुदलसद्दलसच्छविगुच्छवत् ॥ २१ ॥

हर हरेति सतामरुणोदये
द्विरुपदेशवशेन किलान्तरम् ।
अहृत बाह्यमपि प्रसभं तमो
दिनकरो न करोति किमुद्यतः ॥ २२ ॥

तिमिरकौशिकतस्करजारिणी-
कुलमलीयत केवलमीदृशैः ।
उदितवत्युरुतेजसि शक्यते
श्वसितुमासितुमालपितुं च किम् ॥ २३ ॥

यदभवद्विरहज्वरखलुपुरा
तदधुना परिरम्भसुधारसम् ।
उपनते सति भास्वति चक्रयो-
र्युगलमागलमापिबदुत्सुकम् ॥ २४ ॥

स्फटिकपात्रमिव स्फुटरश्मि य-
द्विलसति स्म पुरा विधुमण्डलम् ।
गलितकान्त्यधुना धुरि गोपते-
स्तदधिकं दधिखण्डमिवैक्ष्यत ॥ २५ ॥

जनपदुग्धमधिश्रितमाहृतं
विधिवदाहवनीयहुताशने ।
अजुहवुः सुधयोऽग्निरिणस्तदा
नवपयो पयसोपमितं रमे ॥ २६ ॥

सुरभिदक्षिणबाहुदृशौ तु यौ
विहितकान्तविधी मुनिपुंगवौ ।
मनसि दैवमचिन्तयतां तदा
नियमतो यमनोदकपादुकम् ॥ २७ ॥

मिहिरमम्बरमध्यगतं क्रमा-
दुपचितोष्मभरः स्वकरोत्करम् ।
ददृशुरात्मविदो दधतं वपु
र्हैरमयं रमयन्तमुपासकान् ॥ २८ ॥

क्वचन धूमरुचो विलुलोकिरे
क्वचन निर्मलवज्रमणीरुचः ।
क्वचन नीरधिनीररुचो रवेः
क्वचन काञ्चनकान्तिधरा' कराः ॥ २९ ॥

न पिबति स्म नितान्ततृषाकुलं
मृगकुलं तरुमूलमुपेत्य च ।
अनु विशङ्कय यतात्मविलोचनैः
समकरं मकरन्दमयं हृदम् ॥ ३० ॥

सुखमशेत युवा शिशिरे वधू-
कुचतटे कलहंस इवाम्बुजे ।
अपि पदप्रणयावृन्दमपांशुना
महः रवेर्हरवेदिमतवर्ष्मणः ॥ ३१ ॥

नवपतङ्गशिलानलदर्शन-
स्मृतहरालिकदृक्समतरक्षुपान् ।
उरगराडभिषेकमुमापते-
र्विहितवान्विहितवाञ्छितदायिनः ॥ ३२ ॥

तदहरेव दयाम्बुधिसुधाझरी-
मदघरीभिरलं सुमयश्चगात् ।
स्तुतिभिराविरभूदिह धूर्जटि-
र्धुरि तयोरितयोरमलात्मनाम् ॥ ३३ ॥

जयति तिल्ववनं जगतीतले
जयति तत्र पुरं च चिदम्बरम् ।
जयति तत्र सभा च पुरेऽन्यभू-
द्रुदलकादककाकलितारवः ॥ ३४ ॥

ददृशतुः शिवमम्बिकया समं
चपलया शरदभ्रमिवाद्भुतम् ।
परिजनैः सुकृतैः प्रणयाग्रिमः
अमुदितौ मुदितौ मुनिपुङ्गवौ ॥ ३५ ॥

द्रुतमतर्कितदर्शनविस्मितौ
　शिवमुभौ प्रणिपत्य जगत्पतिम् ।
सपदि तुष्टुवतुः सविधभ्रम-
　द्दिविषदं विषदन्तुरकंधरम् ॥ ३६ ॥

पदयुगं भवदीयमभूदिदं
　नयनयोरयनं सुकृतेन नः ।
न ददृशे पुरुषेण पुरा चिरा-
　दिह वराहवराकृतिनापि यत् ॥ ३७ ॥

स्वजनरक्षणतद्रिपुशिक्षण-
　व्यसनिता विदिता ननु ते विभो ।
यदुदपादि मृकण्डुसुतापदां
　प्रशमनं शमनं भवता घ्नता ॥ ३८ ॥

स्वजनमत्र चिराय समुत्सुकं
　प्रमदनाट्यरसं बत पाययन् ।
सह तरक्षुपदा स पतञ्जलि-
　र्मदनमर्दनमर्थितवानिति ॥ ३९ ॥

अथ ननर्त हर सदसोऽन्तरे
दरनिकुञ्चितवामपदाम्बुज ।
तदुपरि प्रहितस्फुरदङ्गद-
स्वभुजग भुजग परिनर्तयन् ॥ ४० ॥

भृशमनर्ति पिनाकभृता घना-
घनगभीररवभ्रमकारिभि ।
डमरुकध्वनिभिर्गुहवाहन
कलयता लयतालसमक्रमम् ॥ ४१ ॥

अभयमुद्रितमंघकर दय-
स्करमुमापतिरन्यमुदंघ्रिपम् ।
किमपि समदि कोमलताण्डव
व्यसनिनामनुतापहर नृणाम् ॥ ४२ ॥

ध्वनिकृता नटनामृतवर्षिणा
तटिदुदारजटाततिशालिना ।
शमिततापभरा भुवनेऽमुना
मुमुदिरे मुदिरेण यथा इव ॥ ४३ ॥

पशुपतेर्नटनं परिपश्यतां
न हि मनो विषयान्तरमृच्छति ।
कुलमपि स्वकृतेः पशुपक्षिणा-
मुपरतं परतन्त्रमभूद्यतः ॥ ४४ ॥

तदिदमद्भुतताण्डवमुत्सुकौ
समवलोक्य सदाशिवमूचतुः ।
यमिवरौ नमतो यमराण्महा-
भुजगतो जगतोऽस्य हितैषिणौ ॥ ४५ ॥

जय जयामितबोध सुखाम्बुधे
जय जयाद्भुतदिव्यतराकृते ।
जय जयेच्छिकलोकजनिस्थिति-
प्रलय पालय पादनतं जनम् ॥ ४६ ॥

हरिविधिप्रमुखैरमरैः समं
वम चिरं रचयन्निह ताण्डवम् ।
इति मुनी विभुमात्मगिरः सतां
सुलभमालभमानमयाचताम् ॥ ४७ ॥

अथ तथेत्यभिधाय स ताण्डवं
   विरचयन्निजभक्तवरप्रदः ।
अभिरमत्यधुनापि चिदम्बरं
   सुरुचिरं रुचिरञ्जितदिक्तटम् ॥ ४८ ॥

इदमुदन्तमवेत्य रविः स्वयं
   चरणलोकजनाय सविस्मयः ।
गदितुकाम इवास्तगिरेस्तटं
   द्रुततरन्ततरंहिमरगाहत ॥ ४९ ॥

परमभूभृदसौ कुलकुन्दव-
   द्रविरहाविरसेऽरुपदारमनि ।
अवनतद्युतिकौस्तुभतेजसा
   विहितरोहितरोचिरिव स्थितः ॥ ५० ॥

प्रणयनम्रपदद्विमानस-
   ध्वजविलोकनतः शमितुं घनान् ।
अनघधामसमण्डलमादरा-
   दुरुपगूढवगूढरताभिधं ॥ ५१ ॥

सहरथे चरमाचलशृङ्गतो
निपतति द्युमणौ नियतेर्बलात् ।
उचितमेव रथाङ्गयुगं हि य-
द्विजघटे जघटे च तमोजनिः ॥ ५२ ॥

ज्वलति सांध्यमरीचिमिषाद्बहि-
र्विरहिशोकशिखावति विश्वतः ।
उडुशतोदयकैतवतोऽस्फुट-
द्वियदहो यदहोभिरनीदृशम् ॥ ५३ ॥

अतिविविक्ततयाह्नि यज्जग-
त्सकलमर्थसमूहमवैक्षत ।
निपतिते निजचक्षुषि नाशक-
त्सतमसं तमसन्तमिवेक्षितुम् ॥ ५४ ॥

उदजिहीत द्रुतोऽप्रिरिवोदया-
चलतटान्मदनेन जयार्थिना
जलधिना जनकेन कटाश्रितो
हिमकरो मकरोत्थितिकैतवान् ॥ ५५ ॥

प्रणयिनामनुरागवचःक्रमः
प्रणयिनीसविधे शुकहृत्तया ।
अकथि दूतिकयार्धमतिर्हि त-
न्मुखगतः खगतः प्रकटः परः ॥ ६० ॥

अखिलमन्यथयन्सुदृशोऽग्रतो
न हि शशाक विटोऽपि निगूहितुम् ।
कुलटया कलितं वत यद्रते-
ऽधरदलं रदलम्भितलक्ष्म तत् ॥ ६१ ॥

तदनु कोपनयापि तया हठा-
दतितरामपराधकृदप्ययम् ।
शशधरोदयतः स्मरतः सखी-
वचनतश्च नतः परिषस्वजे ॥ ६२ ॥

चषकमध्यगतादधिवासिता-
दलितपाटलसालदलादिभिः ।
प्रणयिनो नवशीधुरभूद्रसं
मदयिता दयितामुखवासितः ॥ ६३ ॥

प्रियतमेऽधरपानसमुत्सुके
　विवलिताननवारिरुहः शुकी ।
कुचतटस्पृशि कल्मषमत्कृते-
　र्वैरतनोरतनोदनुमोदनम् ॥ ६४ ॥

रहसि यासिरमादुपभुक्तव-
　त्युपपतिं यदुपाहृतमङ्गना ।
मयहुमानमतोऽप्यस मा मसी
　चिरमरं रतरश्मिमया तया ॥ ६५ ॥

प्रियतमेन बलादुपभुक्तया
　रहसि बालिकयैभि सलज्जया ।
निजहृदुदितनःपनस्वभता-
　बलिकुचे लिकुचेन ममे मुहुः ॥ ६६ ॥

परिजना इव जात्कपदाया
　निभृतमेत्य निशान्तमकारयन् ।
शशिकराः सुदृशां सुरतश्रमा-
　पनयनाप्रयनाप्युन्मीलनम् ॥ ६७ ॥

कैशिकं न कमितुर्गणयन्त्या
साहसेन बहुमन्तुमनाहि ।
प्राग्ययाद्य पुनरस्य पुरोऽभू-
त्मा हृमेन बहुमन्तुमना हि ॥ ६८ ॥

विततैः स्वकरैर्वियोगभाजां
विधुनानेन समन्ततो मनो भूः ।
तददीपि च माधवेन सख्या
विधुनानेन समं ततो मनोभूः ॥ ६९ ॥

पशुपतिनटनैः परिस्फुरद्भिः
शुचिभसितैरजनि प्रसाधिताशैः ।
हिमकरकिरणैश्च हर्षिता भूः
शुचिभसितै रजनिप्रसाधिताशैः ॥ ७० ॥

श्रीमद्वैदिकमार्गखेलनकलाशुद्धान्तरङ्गः सुधी-
रद्वैतामृतलाभनिर्भरनिजानन्दानुभूतिः सताम् ।
गोप्ता मेटकरीकुलैकतिलको गोपालभूपालकः
काव्येऽस्मिन्क्रमशो नटेशविजये सर्गं चतुर्थं व्यधात् ॥

इति चतुर्थः सर्गः ॥

# पञ्चमः सर्गः ॥



तस्मिन्काले देवतासार्वभौमः
स्रष्टा यष्टुं सत्यलोकात्सदारः ।
निश्चक्रामानुद्रुतो नारदाद्यै-
र्दूरं गङ्गातीरमुद्दिश्य देवैः ॥ १ ॥

ध्यायं ध्यायं दिव्यगङ्गातरङ्गा-
नाधावन्तं राजहंसावतंसम् ।
आरूढोऽसावध्वरस्यार्पितोच्चै-
र्यूपं गङ्गानूपमापाभिरूपम् ॥ २ ॥

श्रीमानेष श्रीशपादाब्जमाध्वीं
नीरश्रीवत्साहिनिर्मोकवल्लीम् ।
वीक्षांचक्रे भूषणं हारयष्टिं
स्वर्निःश्रेणीं सागराणां च गङ्गाम् ॥ ३ ॥

कूलास्फालालोलकल्लोलजाल-
स्फायत्फेनश्वेतमानप्रवाहा ।
आकूपारादा हिमाद्रेश्च मूर्ता
दृष्टा कीर्तिर्या दिलीपात्मजस्य ॥ ४ ॥

बालेबालं प्रस्तरास्फालनोद्य-
त्पाथोबिन्दुप्रौढमुक्ताफलानि ।
उत्क्षिप्योत्क्षिप्याददानोर्मिहस्तैः
प्रालेयाद्रेर्या परिक्रीडतेऽङ्के ॥ ५ ॥

दन्तादन्ति क्रीडतां दिग्गजानां
गण्डोड्डीनैः कीर्यमाणं द्विरेफैः ।
हन्त स्नानात्पूर्वमस्यास्तगन्धं
गन्धर्वीभिर्धूयते यत्र कैश्यम् ॥ ६ ॥

स्नातुं दारैः साकमेकत्र संघं
सप्तर्षीणां सैकते संनिधत्ते ।
क्वापि स्वर्गग्रामणीः सावरोधः
प्रातर्यत्रान्यत्र चार्याः सभार्याः ॥ ७ ॥

अम्भो यस्याः शम्बरं हृत्प्रदेशे
मङ्क्षुः क्षीरं मूर्ध्नि कण्ठे विषं च ।
अङ्गेष्वन्येष्वाकलय्यामृतं च
प्राहुस्तत्तच्छद्वद्वाच्यं प्रवाचः ॥ ८ ॥

मुद्रा यस्याः पातकध्वंसदीक्षा-
माशङ्क्यान्तः स्वाधिकारच्युतिं द्राक् ।
प्रेतेशः किं प्रेषयामास भीतः
सौहार्दाय स्वस्वसारं प्रयागे ॥ ९ ॥

चण्डीलक्ष्मीजन्मभूमी स्पृशन्ती-
मार्गं ताभ्यामादरात्तद्वयस्याम् ।
मत्वा नूनं मध्यदेशे मिलित्वा
गत्वायान्तर्या सरस्वत्युपास्ते ॥ १० ॥

स्नात्वोत्तिष्ठन्यत्र जन्तुस्त्रिवेण्यां
कण्ठे नीलः केशपाशे पिशङ्गः ।
गात्रे शुभ्रः सूर्यकन्यामरस्व-
सभङ्गादिन्यानुरूप्यं बिभर्ति ॥ ११ ॥

वाराणस्यां विश्वनाथोपकण्ठे
कायार्धं या क्लेदयन्ती मुमुक्षोः ।
तापं पापं हन्ति यत्तन्न चित्रं
यस्या मोक्षः सोऽपि याथाकथाचः ॥ १२ ॥

कायव्यूहं प्राप्य कान्तेन साकं
कामं रन्तुं गाढमभ्युत्सुकेव ।
स्वीकुर्वाणा स्रोतसां या सहस्रं
खेलोदारं गाहते पार्श्वमब्धेः ॥ १३ ॥

न क्रोधो मे नाथ वर्वर्ति नित्यं
नागस्त्वय्यप्यस्ति नैतन्मृषेति ।
क्रुध्यन्त्यागस्कारिणं सिन्धुराजं
प्रत्याचष्टे या च्छलोक्तिप्रगल्भा ॥ १४ ॥

मौलौ शंभोर्मालिकावद्विभाती
निर्गच्छन्ती या नखांशुच्छटेव ।
विष्णोः पादाद्व्याकरोत्येतदैक्यं
तन्मूलं हि स्तौति पूरो यदग्रे ॥ १५ ॥

पद्मानेतुः पादनिर्णेजनाम्भो
मत्वाचामन्ति मुनिर्जह्नुनामा ।
सद्यः स्मृत्वा शंभुनिर्माल्यभावा-
च्चण्डेशार्हां भीयतो यामहासीत् ॥ १६ ॥

भूरि स्वैरं यत्पुरा भूतिजालं
स्रोतोलीढं शांकरीये कपर्दे ।
चन्द्रस्निग्धं फेनकव्याजतस्त-
द्वारिप्रान्ते या वमन्तीव भाति ॥ १७ ॥

मुक्ता वाचो युक्तिरम्यां सरस्व-
त्यन्तर्वाहिन्यास्त इत्यात्तवाचाम् ।
पायं पायं पावनाम्भाम्बु यस्याः
सारं निष्ठीवन्ति सारस्वतं यत् ॥ १८ ॥

पाथोदस्निग्धपाठीनमीन-
श्यामीभेकीकर्कटीकच्छपीभिः ।
वीचीमध्यस्पन्दितोद्दीपिकाभिः
सायाह्ने या दर्शनीया समिन्द्धे ॥ १९ ॥

तीरे यस्या देवदारूपगूढे
मध्याह्नार्कम्लानकर्णावतंसाम् ।
भिल्लः स्वैरं पाययन्नम्बु भिल्लीं
दत्ते नाकेऽनादरं देवयूनाम् ॥ २० ॥

शाखाभेदश्लाघनीयाकृतीनां
तीरोपान्तस्थायिनां दिव्यधाम्नाम् ।
भूदेवानां भूरुहाणां च वृन्दैः
प्रासः प्रातर्याच्यते पुष्पवर्षैः ॥ २१ ॥

अन्तर्वेदीनाम्नि तत्तीरसीम्नि
स्रष्टा सृष्टां यज्ञशालां यियक्षुः ।
ब्रह्माध्वर्यूद्गातृहोत्रानुपेत-
स्तत्र प्रेम्णा दारयुक्तो दिदीक्षे ॥ २२ ॥

अभ्यक्तोऽङ्गेष्वेव हैयङ्गवीनै-
रक्ष्णोश्चाभ्यञ्जनीदृश्चितश्रीः ।
क्षौमं बिभ्राणश्चैणं विषाणं
मेने लोकैर्मूर्तिमानेव धर्मः ॥ २३ ॥

अग्राविष्णू दीक्षणीयाख्ययेष्ट्या
धिन्वन्नेषा देवता सम्प्रगृह्य ।
पश्चादिष्टिं प्रायणीयां वितत्य
क्रीते सोमेऽयष्ट चातिथ्ययेष्ट्या ॥ २४ ॥

प्रात सायं च प्रवर्ग्योपसद्भ्या-
महो रात्रेश्चापि मध्य व्रतेन ।
शेष कालं शास्त्रवादप्रवीणै
सभ्यैर्निन्ये साकमम्भोजयोनि ॥ २५ ॥

तत्र भेजे घर्मतापाभियोगा
दक्षिणशाखागुह्यमसाननेन ।
द्वित्रै पुम्भिर्वीज्यमानो पवित्रै
र्गन्धे स्वस्माद्दो महाराज एक ॥ २६ ॥

सुब्रह्मण्ये सामभेदैस्सदानी-
मिन्द्राग्नं स्तेत्याद्दुयत्यप्यमन्दम् ।
सिद्धवारण्ये देवदाहिन्दुमौलि-
र्नान्यामवमा नागमाभिमपूज ॥ २७ ॥

देवैः साकं देवराजं विरिञ्च-
स्तत्रादृश्यं दिव्यदृष्ट्या विदित्वा ।
तैरानेतुं तं हविर्भागहेतोः
पुत्रं तावत्प्रेषयामास तूर्णम् ॥ २८ ॥

धीरस्तिल्वारण्यदेशं स गत्वा
नत्वा शंभुं नारदस्तस्य पार्श्वे ।
साकं देवैः संददर्शामरेशं
तृप्तं नित्यं ताण्डवालोकनेन ॥ २९ ॥

अन्तर्नाट्यानन्दपूरेऽभिवृद्धे
देवस्याग्रे तत्परीवाहकल्पम् ।
अक्ष्णां वृन्दैर्बिभ्रदानन्दबाष्पं
वज्री वीणायोगिना व्यालुलोके ॥ ३० ॥

शंभुर्लम्बचन्द्रपादैः स्रवन्त्या
चन्द्रमाल्या कल्पमया साश्रुमूर्त्या ।
आनन्दाश्रुव्याकुलाक्षोऽमुनापि
साक्षादिन्द्रो वीक्ष्यते स्माविशेषम् ॥ ३१ ॥

क्षीणे पुण्ये मर्त्यलोकं विशन्ती-
त्येषा गीता यानभिप्रेत्य वृत्ता ।
शोच्यस्तेभ्यः कोऽन्य इत्यात्मनीनाः
कर्म त्यक्त्वा केचन प्रव्रजन्ति ॥ ३६ ॥

निष्ठाः केचिन्निर्विकल्पे समाधौ
बोधात्मानं पूर्णमन्तर्बहिश्च ।
शंभुं सान्द्रानन्दमध्यक्षयन्तो
मन्यन्तेऽपि ब्रह्मलोकं तृणाय ॥ ३७ ॥

कामक्रोधौ यस्य यस्याशनायो-
दन्ये यस्यावश्यिकौ जन्ममृत्यू ।
चित्तं प्राणो देह इत्याहुरेत-
त्साक्ष्ये तस्याहं तु सच्चित्सुखात्मा ॥ ३८ ॥

शंसन्त्येवं स्वानुभूतिं सुपर्व-
ग्रामण्यामाकारणे कुण्ठिताशः ।
प्रत्यापृच्छ्य ब्रह्मणे तं सुरर्षि-
र्हन्त व्याचष्टाशयं देवनेतुः ॥ ३९ ॥

आकर्ण्येदं नारदादात्मयोनिः
   कल्पान्ते या कर्महानिर्भवित्री ।
सद्यः प्राप्तां शङ्कमानः स्वयं ताम्
   सिद्धारण्ये देहभेदेन भेजे ॥ ४० ॥

शुद्धः स्नात्वा शैवगङ्गेऽम्भसीह
   प्रत्युत्थातो दैवतैः पद्मयोनिः ।
व्याहृत्यादौ व्याघ्रपादेन साकं
   शम्भुं नत्वा साधु तुष्टाव पश्चात् ॥ ४१ ॥

यो देवानामादिभूतः पुरस्ता-
   न्मामद्राक्षीज्जायमानं महर्षे ।
स त्वं पुत्र शाधि सर्वाधिकेन
   साध्व्या बुद्ध्या चापि सर्वोजयस्व ॥ ४२ ॥

प्रायेणाहोरात्रिभेदादिशून्ये
   काले मायाकर्बुरे केवलस्त्वम् ।
सर्वांल्लोकांश्च प्राणिकर्मप्रभेदं
   चित्रं विश्वं सृष्टवानप्युपेन ॥ ४३ ॥

ब्रह्मा विष्णू रुद्र इन्द्रस्तथान्ये
त्वत्तो जातास्त्वं तु सर्वस्य हेतुः ।
शंभो सर्वस्येशिषे येन तस्मा-
द्योगिध्येयः शश्वदेकस्त्वमेव ॥ ४४ ॥

अज्ञात्वा त्वत्तत्त्वमादित्यवर्गः
पप्रच्छ त्वा को भवानित्यथास्मै ।
सर्वात्माहं सर्वकालानपायी
नान्यो मत्तोऽस्तीत्यवोचः स्वरूपम् ॥ ४५ ॥

स्तोतुं साकं चेतसा द्राक्प्रवृत्ताः
सर्वा वाचः शक्तिशून्या निवृत्ताः ।
अप्राप्य त्वामित्यहो वेदवादे-
ऽप्यज्ञः स्तोतुं हन्त सोऽहं प्रवृत्तः ॥ ४६ ॥

वेदस्त्वन्निःश्वासभूतस्त्वयादौ
क्लृप्तः कर्मब्रह्मकाण्डात्मको यः ।
तस्येदानीमज्ञतस्तावदास्ते
प्रामाण्याप्रामाण्ययोगः प्रसक्तः ॥ ४७ ॥

आज्ञाभूत ते श्रुतिस्मृत्यशेषं
तस्य स्यादुल्लङ्घने दोषभूमा ।
अहो जन्तुर्नन्वनीशोऽयमातः
सर्वज्ञे किं न्वस्ति विज्ञापनीयम् ॥ ४८ ॥

ब्रह्मण्यब्रह्मण्यमेवं ब्रुवाणे
सानुक्रोशः शंभुरेनं जगाद ।
अथारभ्यादन्तु गामश्वराशा
अशी. स्वै· स्वैरास्यतामत्र चेति ॥ ४९ ॥

शंभोरेवंभाषमम्भोजजन्मा
व्यक्त बुद्धा व्याघ्रपादानुयातः ।
ईशं नत्वा यज्ञदेशं यियासुः
प्राज्ञानन्दः प्रार्थयामास सख्याम ॥ ५० ॥

आर्याजनिराहया व्याघ्रपादौ
ये तत्रामन्यब्रह्मकर्मप्रवीणाः ।
संध्यावद्भिर्नैः सहस्त्रत्रयेण
ससाग प्रातिष्ठिपन्मुमुक्षै. ॥ ५१ ॥

तिल्वारण्यादुत्थितस्तैः सहैव
व्योमाध्वानं व्योमयानेन तीर्त्वा ।
वेगादन्तर्वेदिमासाद्य सद्य-
स्तत्रत्यं स्वं देहमेष प्रविष्टः ॥ ५२ ॥

सभ्यैरेभिः साकमृत्विक्प्रवेकै-
स्तावद्यज्ञे प्रह्मणस्तायमाने ।
अत्यागच्छन्हव्यमादातुकामा
देवास्तत्र द्योतमानैर्विमानैः ॥ ५३ ॥

स्वैरं भुक्त्वा षड्रसोपेतमन्नं
भूषावासोभूषितो दिव्यगन्धः ।
विद्वल्लोको वीटिकाभृत्सभायां
तुष्टः संघीभूय तुष्टाव यज्ञम् ॥ ५४ ॥

प्राग्वंशात्प्राक्सोमवेद्यां सदोऽग्नी-
द्ध्रेहोपेतायां हविर्धानवत्याम् ।
अग्निश्चित्ये पुच्छपक्षात्मशीर्षै-
र्युक्तो यज्ञस्यैव वाहोऽवतीर्णः ॥ ५५ ॥

तस्मिन्नेव स्थण्डिलेऽग्निः प्रणिन्ये
चैत्ये यूपे पूर्वतः स्थापितस्य ।
अग्नीषोमीय. पशुश्चाथबन्धे
नेतुर्बाहुस्तत्समीपे हि नाद्य. ॥ ५६ ॥

अन्यथाऽस्ते यांहमो हेतुराया-
स्तां हिंसां तद्धूमिनीं तत्र बुद्धा ।
आजिघ्रन्तो होमगन्धं वपाया
आशां शमोरद्भुतामभ्यनन्दन ॥ ५७ ॥

अध्वर्युर्वसमीवरीरथ गृहीत्वापोऽर्धराग्रे हवि-
र्धाने साध्वभिषुत्य सोममभिसंगृह्य ग्रहेषु क्रमात् ।
हुत्वाग्नौ सह एव शिष्टमिह संभक्ष्यानुमान्य स्तुत
शास्त्रं च प्रतिगीर्य सोऽनुसवनं युक्तान्वितेनै विधीन् ॥

उद्गातरि स्तुवति सामभिरात्तशस्त्रो
होता वचं तदुपरि प्रशशंस तस्मै ।
अध्वर्युरा: प्रतिगृणाति वच वच त-
द्वथानुमन्यत इति प्रजगुः कवीन्द्राः ॥ ५९ ॥

विधिवदवभृथान्ते विस्तृतं दक्षिणाभिः
सुरसरिदुपकण्ठे सप्ततन्तुं समाप्य ।
वरमृषिगणमन्त्रैर्वेदिदेशे निवेश्य
स्वयममरयुतोऽजः सत्यलोकं जगाहे ॥ ६० ॥

श्रीमद्वैदिकमार्गखेलनकलाशुद्धान्तरङ्गः सुधी-
रद्वैतामृतलाभनिर्भरनिजानन्दानुभूतिः सताम् ।
गोप्ता मेटकरीकुलैकतिलको गोपालभूपालकः
काव्येऽस्मिन्क्रमशो नटेशविजये सर्गं व्यधात्पञ्चमम् ।

इति पञ्चमः सर्गः ॥



## षष्ठः सर्गः ॥

गुणनिधिरिह तर्हि गौडनाथो
विपुलबलोऽजनि विक्रमाङ्कनामा ।
दशरथ इव यो द्वयोर्महिष्योः
शुभगुणयोस्तपसाभजत्सुतांस्त्रीन् ॥ १ ॥

शिवभजनकृतेषु सिद्धवर्मा
तनयवरेषु दयालुरग्रजन्मा ।
पितुरनघगुणैः प्रियोऽतिमात्रं
समजनि राम इव पितानुकूलः ॥ २ ॥

प्रवयसि पितरि प्रयोद्यत-
व्यवसितपरिमण्डिमानमग्रजोऽपि ।
अयमनुमनुते स्म न स्वराज्यं
मुदितमना भरताग्रजेव रामः ॥ ३ ॥

सितवपुरधिकं स सिंहवर्मा
शतभिषगाहितसत्क्रियोऽपि शश्वत् ।
विधुरिव हृदये वहन्कलङ्कं
कृशतनुराश्रितवान्गिरीशमेव ॥ ४ ॥

व्युदसितुमयमङ्गभूविकारं
बत बहिरन्तरिव प्रसह्य जातम् ।
अचकमत शिवार्चनेन शश्व-
त्स हि विदितः स्मरशत्रुरादिवैद्यः ॥ ५ ॥

शिवचरणसमर्पितान्तरः श्री-
शिखरिवटाटविकालहस्तिकाञ्चीः ।
नियतमतिरटन्निषादयूना
सममभजच्च चिदम्बरं कदाचित् ॥ ६ ॥

अविकलहठयोगराजयोगा-
भ्यसनपरैः शुकशारिकार्भकैर्यत् ।
परिचितपदभाष्यफक्किकैश्च
प्रथितपतञ्जलिपुण्यपर्णशालम् ॥ ७ ॥

घनतरसुकृताद्रिकूटकल्पैः
शिवचरणाब्जसमर्पितापनीतैः ।
प्रथयति ननु बिल्वराशिभिर्यं-
स्सुरभितरक्षुपदोटजं समन्तात् ॥ ८ ॥

परिचितभसितत्रिपुण्ड्रपच्छा-
श्चरजतरुद्रजपा सदा मुनीन्द्राः ।
पशुपतिपशुपाशबन्धमोक्षा-
ऽखिलपदार्थविदो यदाश्रमन्ति ॥ ९ ॥

चिरतरमुरुभैक्षिदम्बर त-
स्पुरमधिगम्य तरक्षुपादमत्र ।
शरणमुपजगाम सिद्धवर्मा
रविमिव साम्बमुमाशिवं कृतार्तः ॥ १० ॥

स्फुटतरशिवभक्तिचिह्नमेनं
विनयमिवाप्तविग्रहं महर्षिः ।
अभिमुखमतिशीतलैरपाङ्गै-
रमृतमयैरिन्दुरिवांशुभिश्चकोरम् ॥ ११ ॥

ऋषिवरमवलोक्य राजपुत्रो
घनमिव तापकदर्थित: शिखीन्द्र: ।
हृषिततनुरुहोऽतिहृष्टचेता:
श्रुतिसुखदां गिरमाददे गभीराम् ॥ १२ ॥

सुकृतसुरमहीरुहैरिदानीं
फलिभिरभावि मदीयपूर्वपुंसाम् ।
चरणकमलसेवया यतस्ते
चिरमहमस्मि चराचरेषु धन्य: ॥ १३ ॥

जगति पतिमपामपादगस्त्य:
शयचुलुकेन पुरेत्यहं शृणोमि ।
दुरितजलधिशोषणक्षमं त्वां
पदरजसाद्य परं निशामयामि ॥ १४ ॥

कुरु मयि भगवन्कृपां क्षणं ते
मनसि निवेदितमस्तु मामकीनम् ।
तव सविधमुपागतस्त्वगात्यो
धरणिपतेस्तनयोऽस्मि सिंहवर्मा ॥ १५ ॥

जगदुपकृतयेऽत्र जागरूकं
शरणमुपैमि भवन्तमीदृशोऽहम् ।
किमु जगति घनाघनं विनैकं
गतिरितरास्ति कृशस्य चातकस्य ॥ १६ ॥

अनुपधिकमनुग्रहं विधेहि
प्रबलगदाभिहते मयि प्रपन्ने ।
ननु जनपरितापनोदनाय
प्रभवति स द्विजराज एव पूर्णः ॥ १७ ॥

क नु मम जननं क तिन्वदेशः
क च यत मच्चरितं क दर्शनं ते ।
अघटितघटनापटीयसीभिः
शिवकरुणाभिरहो समुज्जजृम्भे ॥ १८ ॥

इति निगदति दीनमिङ्गितज्ञो
धरणिपतेस्तनये सराघुपाद* ।
अविकलमचरोदनुग्रहं य-
स्सदयहृदः शरणागतेषु सन्तः ॥ १९ ॥

अलिकगतशुभाक्षराङ्कुरोत्थि-
त्यनुगुणदोहलभास्मनत्रिपुण्ड्रम् ।
स्नपयति पयसि स्म शैवगङ्गे
स तमुपवामकुशं कृशानुकल्पः ॥ २० ॥

अमुमथ शिवगङ्गयाभिषिक्तं
कनकरुचिं विरचय्य कंचिदस्मै ।
मनुवरमुपदिष्टवान्महर्षि-
र्वितरति च स्म हिरण्यवर्ममंज्ञाम् ॥ २१ ॥

अवसदिह तदाद्यमौ प्रसक्तः
सततमनन्यमनाः शिवार्चनायाम् ।
तपनमति महत्युपप्लवेऽपि
क्वचन मृकण्डुकुमारवद्दृढात्मा ॥ २२ ॥

त्रिपुररिपुजपी त्रिकूटशैले
त्रिषवणसवनकृत्त्रिपुण्ड्रधारी ।
त्रिकरणविमलस्त्रिलोकनेतु-
स्त्रिपुरभिदोऽकृत स त्रिकालपूजाम् ॥ २३ ॥

हिमकरमकुटं हिरण्यवर्मा
   परिचरति स्म तथैव पार्वतीशम् ।
सततमपि यथा सभा मुनीना-
   मभिनवमेनमगस्त्यमेव मेने ॥ २४ ॥

जनकमथ कदाचिदस्य जीर्णं
   प्रतिनृपतिः प्रथमस्सुतं च बुद्ध्वा ।
त्रिदिवममदःपदं जिघृक्षु-
   र्द्रुतमभिषेणयति स्म दुर्विनीतः ॥ २५ ॥

रथगजहयपोधराजिनियं
   घुमुलरजोभरधूसरान्तरालान् ।
अपटुकरणसम्भ्रमात्पतन्तो
   रथशिखरं परिरेभिरेऽस्य गृध्राः ॥ २६ ॥

अपि च रथशिरस्यसह्यपातं
   झपदि निपत्य समं मुखानि गृध्राः ।
अनुपदमुदतेजयन्नमार्धं
   कठिनकसेवककर्णनेव्यथेव ॥ २७ ॥

विपुलवलदकाण्डचण्डवात-
व्यतिकरनिर्दलितोऽस्य केतुदण्डः ।
अपतदधिबलं तदानुकुर्व-
ञ्शमनकरेरितकालदण्डरीतिम् ॥ २८ ॥

प्रबलपटहभेरिशङ्खनादैः
प्रलयघनाघनगर्जितप्रकाण्डैः ।
शिथिलितजगदण्डसंधिबन्धै-
र्हरिदिभफीट्कृतिमांसलैरजृम्भि ॥ २९ ॥

सपदि वियति बभ्रमुः शकुन्ता-
स्तरुशिखराणि जनास्तदाध्यरोहन् ।
गृहमनु निवहो गवामधाव-
त्पटहरवे परितो विजृम्भमाणे ॥ ३० ॥

घनमिममवकर्ण्य कर्णशूलं
पटहरवं भटवीरवादमिश्रम् ।
विपुलभुजबलोऽथ विक्रमाङ्को
निजनगरान्निरगान्नृपः ससैन्यः ॥ ३१ ॥

कतिचन करिकंधराधिरूढाः
पुनरितरेऽश्ववरिष्ठपृष्ठनिष्ठाः ।
अधिरथमपरे कृताधिरोहा
बहिरगमन्नगरात्पदातयोऽन्ये ॥ १२ ॥

करकलितकृपाणमात्तचापं
पटुतरसंनिवं प्रसह्य गौडः ।
अभिमुखमरिसैन्यमभ्यधाव-
च्चलतडिदभ्रमिवाशु चण्डवायुः ॥ १३ ॥

त्वरितमथ तुरङ्गिणा तुरङ्गी
समकृतहस्तिपकेन हस्तिपालः ।
रणभुवि रथिना रथी भटेन
प्रतिभट इत्युदभून्मिथः समीकम् ॥ १४ ॥

रथिभटतुरगेभरक्तधारा-
स्नपितधरणीपतदुत्पतत्कबन्धम् ।
समभवदसृगासवप्रपानां
सुरमुनिरैक्षत विस्मितः सुयुद्धम् ॥ १५ ॥

झपदि रथिशिरांसि सारथीना-
मुपरि निपत्य समं तदुत्तमाङ्गैः ।
अथ हयमभिपत्य तच्छिरोभिः
सह युगपत्समरक्षितौ निपेतुः ॥ ३६ ॥

अरिभटरुधिरारुणैः शरैः खं
निबिडतरं नितरां बभार शोभाम् ।
भटसुरसुदृशां प्रवालदण्डै-
र्विधिविहितस्य विवाहमण्डपस्य ॥ ३७ ॥

अभिनवरुधिरारुणानि हृत्वा
करिवरकर्णदलानि काकगृध्रैः ।
अनुतरुशिखमर्पितानि रेजु-
र्ध्वजपटवत्त्रिदशीस्वयंवरस्य ॥ ३८ ॥

द्विपकरहृतदूरनुन्न एको
वियति तदा सुरवारसुन्दरीणाम् ।
वरवरणमरं विचार्य वक्तुं
तदिव पुनर्धरणीतले पपात ॥ ३९ ॥

स्ववदनमपरः स्वयं गृहीत्वा
गगनपथेऽतिजवेन गृध्रनीतम् ।
अहरत मणिकुण्डलान्यनर्घा-
ण्यमरपुराङ्गणिकाहृतो विमाने ॥ ४० ॥

असिविदलितहस्तिदन्तखण्डैः
सममदसीयशिरोविकीर्णमुक्ताः ।
शरशकलितचन्द्रतारकाभा
अधिसमराजिरमम्बरान्निपेतुः ॥ ४१ ॥

महति रुधिरमण्डले निपेतु-
र्मदगजमस्तकमौक्तिकप्रवेकाः ।
ज्वलन इव भटाग्रणीजयश्री-
परिणयमङ्गलविप्रकीर्णलाजाः ॥ ४२ ॥

समजनि विजयः पराजयो वा
समबलयोरुभयोर्न संप्रहारे ।
कतिपयदिवसैस्तु गौडनेतुः
प्रलयमगमदनल्पकोशजालम् ॥ ४३ ॥

स तु विमलमतिः समाहितात्मा
सचिवगिरा शिवसंनिधौ निषण्णः ।
अभयवरदमात्मबन्धुमेनं
चिरमनुचिन्तयति स्म शत्रुहत्यै ॥ ४४ ॥

शरणमुपगतं सुतं मृकण्डो-
रतिलघु मृत्युमुखादमोचयद्यः ।
अपि दशमुखमर्थितप्रदाना-
दतनुत हृष्टममुष्य सोऽप्रतोऽभूत् ॥ ४५ ॥

मनुकुलमणिदीप मा स्म भैषी-
स्तव तपसा त्वदपत्यभक्तितश्च ।
त्वरितमरिकुलं तवापनोत्स्या-
म्यहमिति तं स वदन्नभूदद‍ृश्यः ॥ ४६ ॥

निरवधिकरुणानिधिर्महेशो
निटिलतटीनटदीक्षण, क्षणेन ।
निशि निशितशराग्निशूलहस्तो
निखिलमरातिकुलं निरास्थदस्य ॥ ४७ ॥

पतिरपि चरणं प्रगे प्रजाना-
मिदमविदन्नधिरुह्य बाह्यदेशे ।
अरिकुलमखिलं हतं विलोक्य
प्रमुदितहृत्प्रशशंस पार्वतीशम् ॥ ४८ ॥

अथ नृपतिरसौ सुधीरमात्या-
न्सदसि तदा समहितान्समाजयित्वा ।
शिवमिदमभवच्छिवाश्रयात:
परमिह किं करणीयमित्यपृच्छत् ॥ ४९ ॥

प्रगुणतरपरम्परैकमत्य-
द्रढिमदलत्परराष्ट्रमन्त्रतन्त्राः ।
प्रतिजगदुरमी परावरज्ञाः
परिणतिचारु वचोऽस्य पथ्यमित्थम् ॥ ५० ॥

त्वमिह नृप पिता त्वमेव माता
त्वमितरबन्धुरथ त्वमीश्वरश्च ।
इति जगति जना हितैषिणं त्वां
ननु कथयन्ति नयोत्तमं सदाप्तम् ॥ ५१ ॥

पलिततरशिरस्तया प्रजाना-
मवनविधावधुना भवानशक्तः ।
प्रभवति य इह प्रधानसूनु-
र्विधिवशतो भवतः स विप्रकृष्टः ॥ ५२ ॥

अहह जनपदेष्वराजकेषु
स्वगृहकलत्रसुताः स्युरव्यवस्थाः ।
अथ जगदखिलं मिथः प्रकुप्ये-
त्सपदि च मात्स्यनयः समुज्जिहीते ॥ ५३ ॥

विषयमिह विवर्जितं नियन्त्रा
निभृतमरिर्निविशेत लब्धरन्ध्रः ।
गृहपतिरहितं गृहं विशङ्को
विवृतकवाटमिवाशु विश्वकद्रुः ॥ ५४ ॥

उपकरणशतोपशोभमाना-
प्यधिगतवत्यपि वाहिनीशमग्र्यम् ।
परिवृढरहिता तु पार्थिवश्री-
र्न चलति नौरिव नष्टकर्णधारा ॥ ५५ ॥

नृपतिरिह यदा निजादपेत-
स्तृणवत्तूलतुलायतेऽतिशोच्य ।
घनगिरिवरगह्वरान्च्युतश्चे-
दपि हि वृकैरभिभूयते तरक्षु ॥ ५६ ॥

तदिह तनयमानयात्मज त
प्रभुमवने कुरु भद्रमस्तु राज्यम् ।
दृढतरमवलम्ब्य दारुधुर्यं
जगति हि तिष्ठति धाम दीर्घकालम् ॥ ५७ ॥

इति सचिववचो हित निशम्य
प्रकृतिभिरप्यनुमोदित प्रजेश ।
परमशिवमुपास्य भक्तियुक्तो
निजतनयावनने निरूढभाव ॥ ५८ ॥

तदभिमतमधिगम्य दिव्यदृष्ट्या
निजभगिनीतनये निवेश्य चैनम् ।
यदिह तु नृपसुत पुर प्रतीति
न्यगमदुपेत्य चिदम्बर वनिम ॥ ५९ ॥

तदनु मुनिवचस्तरक्षुपादो
हृदि शिवकार्यहितं विचार्य सद्यः ।
नृपसुतमनुनीय नीतिवादै-
रवददिह स्थिरकीर्तिमस्य काङ्क्षन् ॥ ६० ॥

त्वमसि शिवकटाक्षतो धुतार्ति-
र्जगदवनं भुजजन्मनां हि धर्मः ।
तदिह निजपुरं त्वरस्व पित्र्यं
परिचितमाप्नुहि भद्र भद्रपीठम् ॥ ६१ ॥

स्थित्वा कंचन कालमात्मनगरे कृत्वा प्रजारञ्जनं
प्रत्यागम्य चिदम्बरं पुनरिदं श्रीराजधान्यां प्रभोः ।
निष्पाद्यात्र शिवस्य वेदविहितां नित्यां च नैमित्तिकी-
मन्तर्वेदिगतैर्वितानय महापूजां मुनीन्द्रैरिति ॥ ६२ ॥

स तथेति समेत्य गौडदेशे
निजराज्यं परिभुज्य शश्वदत्र ।
त्रिसहस्रयुगेत्य विल्वदेशं
शिवकैङ्कर्यमिह स्वयं वितेने ॥ ६३ ॥

४२H/

अष्टप्राकारजुष्टं हरिदधिपचतुर्गोपुराग्र्यं सहस्र-
स्तम्भोत्तम्भाभिरामस्फटिकमयमहामण्डपं सत्तटाकम् ।
वीथीभिर्भासमानं विविधमणिगृहं पुण्डरीकाभिधानं
शिल्पिश्रेष्ठैर्विचित्रं व्यरचयत पुरं शाश्वतं हेमवर्मा ॥

श्रीमद्वैदिकमार्गखेलनकलाशुद्धान्तरङ्गः सुधी-
रद्वैतामृतलाभनिर्भरनिजानन्दानुभूतिं सताम् ।
गोत्रा मेटकरीकुलैकतिलको गोपालभूपालक.
काव्येऽस्मिन्नमशो नटेशविजये सर्गं तु षष्ठं व्यधात् ॥

इति षष्ठः सर्गः ॥



## सप्तमः सर्गः ॥



एकदा किल हिरण्यवर्मणा
क्लृप्तमत्र शिवकार्यमद्भुतम् ।
प्रेक्ष्य तुम्बुरुरितो गतो दिवं
पृष्ट एवमवदद्बृहस्पतिम् ॥ १ ॥

श्रीनटेशशिवकामसुन्दरी-
नित्यवासनिबिडीकृतोत्सवा ।
वेदशास्त्रविपणिर्विराजते
पुण्डरीकनगरीति भूतले ॥ २ ॥

यत्र हाटकसदस्यहर्निशं
नृत्यतो निटिलचक्षुषो मुदा ।
पूर्वसागरतरङ्गभाङ्कृति-
र्व्याकरोति घनवाद्यवैखरीम् ॥ ३ ॥

सौधगोपुरगृहैः सहैव या
प्रस्थितेव निलयं पतञ्जलेः ।
लक्ष्यतेऽधिशिवगाङ्गमुत्तम-
न्त्यम्बुबिम्बनवशादधोमुखी ॥ ४ ॥

पूर्वतन्त्रपदभाष्यभाषिणौ
यत्र जैमिनिपतञ्जली उभौ ।
पूर्वमद्य तु परःशता बुधा-
स्तादृशाः प्रतिवसन्ति दुर्जयाः ॥ ५ ॥

सारहीरमणिसौधदीधिति-
व्यापनेन विगमय्यहर्निशम् ।
यत्र तर्कहृदयावगाधिया-
मन्धकारपदवाच्यमाथिनः ॥ ६ ॥

यत्र यज्ञगृहधूमधोरणी
उर्वी दिवोऽवतरतां हविर्भुजाम् ।
बालचापजनिताधिविनिर्मिता
रोहणालिरिव लक्ष्यतेऽम्बरे ॥ ७ ॥

हर्म्यभूरगुरुधूममण्डली
कुर्वती नभसि कालिकाश्रियम् ।
यत्र शश्वदुपयाति निर्भरं
नीलकण्ठनटने निदानताम् ॥ ८ ॥

पद्मरागमणितोरणच्छटा
पाकशासनशरासनोज्ज्वले ।
नीलसौधनवनीरदान्तरे
यत्र भान्ति युवतिक्षणप्रभाः ॥ ९ ॥

चारु यत्सदनचन्द्रशालिका-
जालकान्तरचरो विधुर्ध्रुवम् ।
चुम्बितो युवजनैः प्रियास्यमि-
त्यङ्कवानजनि तद्रदक्षतैः ॥ १० ॥

व्योमसिन्धुजलवीचिशीतल-
स्फीतकेतनपटाञ्चलानिलैः ।
यत्र सौधशिखरेषु यौवतं
संचरत्सुरतखेदमुज्झति ॥ ११ ॥

कापि यत्र पटवासपांसुले
केलिसौधशिखरे कुमारिकाः ।
कुल्ययाभ्रमरितः कुतूहला-
त्पोषयन्ति नवपुष्पवाटिकाः ॥ १२ ॥

प्रोन्नतेषु किल पूर्वपश्चिम-
स्वर्णगोपुरशिरःसु संगता ।
स्वर्णदीसितवितानसंपदं
तन्वती वियति यत्र दृश्यते ॥ १३ ॥

यत्र वज्रमयगोपुरस्फुर-
न्मध्यमध्यचरमर्कमण्डलम् ।
वेदितुं दिवि विधुंतुदो झटि-
त्यक्षमो मिलति दृग्न जातुचित् ॥ १४ ॥

रत्नमालिकपिमण्डलं दिवि
ध्यानमापपरिवेषविभ्रमम् ।
पुष्पवद्विरहितं प्रपद्यते
यत्र विष्णुपदहंसकाभिधम् ॥ १५ ॥

वीक्ष्य केलिवनसीम्नि सुभ्रुवां
यत्र चारुगतिमेतदीप्सया ।
स्नाति हंसमिथुनं मृणालभु-
ग्दीर्घिकासु सवनत्रयं शुचि ॥ १६ ॥

नालिकेरतरवो निजैः फलैः
शैवगाङ्गसलिलानि बिभ्रतः ।
स्वर्गसिन्धुपयसो निरीक्षितुं
स्वादिमानमिव यत्र सून्नताः ॥ १७ ॥

अग्रसीम्नि शिशिरालयेऽङ्कुर-
त्पल्लवं क्वचन बिल्वकानने ।
वीक्ष्य यत्र जनता विशङ्कते
व्याघ्रपादपचितावशेषितम् ॥ १८ ॥

भर्गयोग्यनवपुष्पवाटिका-
सौरभोच्चयहरं समीरणम् ।
प्साति यत्र फणिराट् भवद्रुहः
शिक्षणं हि शिवभक्तलक्षणम् ॥ १९ ॥

गन्धहस्तिकरटस्थलस्खल-
द्भृङ्गसङ्गतमदा यदङ्गिनी ।
पीड्यते प्रतिगजेन मानिनो
मर्षयन्ति न हि गन्धमप्यरे ॥ २० ॥

यत्र सेवितुमुपेयुषा शिव
भ्राम्यता रथहया इति प्रजा ।
मन्यते मरकतोपलस्फुर-
न्मन्दुरोदरगतान्महाहयान ॥ २१ ॥

कम्पते रविरवेक्ष्य खड्गिनो
गण्डदानमसमर्मोदिनः खलु ।
दाघुनाखदलितस्वविग्रहो
विग्रहं मम विदारयेदिति ॥ २२ ॥

अङ्गनां युवजनेऽप्यहर्निश
संपरत्नवमदेषु रूपत ।
मान्यरं व्रजति यत्र साहसी
सततं विनयनेऽपि शामति ॥ २३ ॥

जाग्रति त्रिनयनेऽपि चेष्टते
मन्मथः कथमिहेति विस्मिताः ।
वीक्ष्य यत्र तरुणं दिवौकसो
निर्णयन्ति मनुजं निमेषणात् ॥ २४ ॥

स्वस्य यत्र शुकशारिकार्भकैः
श्राविते सुरतचाटुनि प्रगे ।
कार्यमन्यदपदिश्य गच्छति
व्रीडया गुरुसमीपतो वधूः ॥ २५ ॥

केलिवेगगलितं नतभ्रुवां
मन्दिरेषु मणिमौक्तिकव्रजम् ।
प्रातरुत्करगतं प्रमार्जना-
द्वीक्ष्य यत्र धनदोऽपि लज्जते ॥ २६ ॥

वीक्ष्य यत्र मणिमौक्तिकावली-
र्विस्तृता विपणिपूपकण्ठगाः ।
नूनमेष निखिलस्वलुण्टना-
त्क्रोशतीति कवयोऽब्धिमीरते ॥ २७ ॥

शीतदीधितिशिलोदयस्पय -
   पूरदूरितरजस्तृणा भृशम् ।
भ्रामयत्युषसि यत्रतोलिका
   चन्द्रिकैव नवचेटिकायते ॥ २८ ॥

गोपुरे मरकते कृता शुकी
   स्वप्रियेति समुपागत शुक ।
स्पर्शत परमवैति सत्वत
   स्पन्दत परमसु च यज्जन ॥ २९ ॥

यत्र हेममणिदीपिकाधिरोहिण
   पार्श्वयोर्मुकुरभित्तिबिम्बितान् ।
स्वान्कृताञ्जलिपुटा परान्विदु
   वीथिकासु विविधाभ्यागताविधाम् ॥ ३० ॥

यो हिमेशरदिरम्भपा मुनौ
   पैत्तिके विमति न गवेषयन् ।
पर्वत प्रतिगृह भ्रमन्नपि-
   त्रैलगीति महर्षिरिति भ्रमात् ॥ ३१ ॥

स्नातचोलयुवतिस्तनद्रव-
स्कुङ्कुमारुणकवेरजोर्मिभिः ।
कुर्वता परिचयं कृतार्थिताः
पावनेन पवनेन यज्वनाः ॥ ३२ ॥

मत्स्यमब्धिजलमध्यतो हृतं
प्रेक्ष्य यत्र गरुडेन भक्षितम् ।
स्वीयमन्तुशमनार्थमुद्धृतां
दृष्टिमर्पयति तत्पदे हरिः ॥ ३३ ॥

पूर्वसिन्धुलहरीपरंपरो-
त्कूलितः किल सह्याब्धिकन्यया ।
विष्णुरध्युषितशेष एव गो-
विन्दराज इति यत्र विश्रुतः ॥ ३४ ॥

भोगवत्यपि सुधर्मवत्यपि
स्फीतचैत्ररथवत्यपि स्वयम् ।
न द्विजिह्वसहिता न सत्रभु-
क्संकुला न सकुबेरका च या ॥ ३५ ॥

योगिनो दहरविद्ययोत्सुका
सर्वलोकविदुपासनोचितम् ।
या विराड्हृदयपुण्डरीकमि-
त्याहुरस्म किल मानमागम ॥ १६ ॥

तत्र केचन वसन्ति दीक्षिता
धीक्षितागमपुराणविस्तरा ।
आश्रिता सततमाहिताग्नय
माधव शिवपदैकसमया ॥ १७ ॥

ते हि सिन्धुसुतय शिव गिरा
दर्शयन्ति कृतकेतरोक्तिभि ।
दर्शयन्त इव देवतागमि
न्यायनिर्णयकलापोपलादिभि ॥ १८ ॥

राजराजपुरजन्म यथोत्सवे
कारयाम इति पद्धकदृशा ।
एकदा नटपरिघिं गुरा
मार्गशीर्षकमहोत्सव मधु ॥ १९ ॥

भेरिभांकृतिभरेण निर्दल-
भूनमद्य निपतेत्खमित्यमी ।
पुंगवाञ्चितपटाञ्चलध्वजो-
त्तम्भितं विदधिरे तदादितः ॥ ४० ॥

पालिकासु यदि पञ्चसु प्रति-
प्रापिता दिगधिपास्तदार्चकैः ।
अद्भुतं किमिह हन्त यैर्विभुः
पञ्चभिश्चुलुकितः परोऽक्षरैः ॥ ४१ ॥

अध्वरेपु विधिवन्मुदा यदा-
ह्वानत· क्रतुभुजोऽभजन्हविः ।
तद्ध्वनिश्रवणमात्रतस्तदा
सत्वरं सपरिवारमापतन् ॥ ४२ ॥

हस्तिमेषमहिपाशरामणी-
नक्रऋश्यनरनन्दिवाहनाः ।
आपतन्हरिदधीश्वराः पुर-
स्कृत्य खे गरुडहंसवाहनौ ॥ ४३ ॥

मण्डितानि मणितोरणालिभि-
र्गोपुराणि गगने चकाशिरे ।
सोऽरिवावतरतां दिवौकसां
व्योमयानवलयानि बिभ्रतः ॥ ४४ ॥

शैवयागविधिना समर्पितं
हव्यजातमुपगृह्य हव्यवाट् ।
अर्पयन्करतलेऽम्बिकापते-
रात्त इत्यगणि तावदागतैः ॥ ४५ ॥

चन्द्रहंसहरिभूतमैन्धव-
क्ष्माधरद्विरदनिर्विशेषिभिः ।
वाहनैर्मणिवरोज्ज्वलैः शिवं
तेऽनुयीपि समपारयन्द्विजाः ॥ ४६ ॥

तालमर्दलकगोमुकाहली-
भेरिशङ्खपटहारवैर्भृशम् ।
बाधिरी नयनयोः पतत्प्रले-
ष्वावदाविरभवत्तदद्भुतम् ॥ ४७ ॥

अभ्यभूयत जनारवस्तदा
वाद्यवर्गनिनदेन वल्गुना ।
सोऽपि कीर्तनभरेण शूलिनो
वेदघोषविभवेन सोऽपि च ॥ ४८ ॥

चन्द्रमण्डलमुपेयुषि स्वयं
वाहनायितमुमापतौ मुदा ।
तारकाभिरपि तत्क्षणं महा-
दीपिकात्मभिरभावि सर्वतः ॥ ४९ ॥

साम्प्रतं हि शिवकामसुन्दरी-
मन्दयानमहिमाभिलाषिणः ।
स्कन्धसीम्नि कलहंसिकापते-
रम्बिकार्धवपुषोऽधिरोहणम् ॥ ५० ॥

कोपविस्तृतकरालदंष्ट्रकं
सिंहमिन्दुमकुटेऽधितिष्ठति ।
सादरं शरभमूर्त्युपासकाः ;
साधु साध्विति शिरांस्यकम्पयन् ॥ ५१ ॥

दर्शयन्निव पतञ्जलौ दयां
नागराजमवलम्ब्य निर्गतः ।
मञ्जुतत्फणमणिश्रियारुणं
संध्ययेव शशिनं वहञ्छिवः ॥ ५२ ॥

भूतनाथमनुभाव्य निःसर-
द्दीपनेत्रपुटमुत्थितोदरम् ।
मेनिरेऽखिलभृतो महाभरा-
द्धूर्जटेरुदितदुर्दशं जनाः ॥ ५३ ॥

अम्बरक्षमधिरुह्य निर्गते
मादिवेषजुषि शङ्करे पुरः ।
मङ्क्षु जातमणिमङ्गमर्दन-
प्रत्यभिज्ञमभवत्प्रजाजनः ॥ ५४ ॥

रावणांसगतकम्प्रभूधरा-
रूढमद्रिसुतयान्वितं शिवम् ।
वीक्ष्य राक्षसविमानिताः पुरा
संनिधातुममराः शशङ्किरे ॥ ५५ ॥

एकमूर्तिभरणेऽपि यस्य दि-
ग्दन्तिनो दधति खेदमेकदा ।
अष्टमूर्तिममुमद्भुतं गजो
वाहनाकृतिरुवाह विभ्रमात् ॥ ५६ ॥

विश्वतो वृषभवाहनोत्सवे
संपतन्सुरनरौघवारिधिः ।
रोधसी रचयति स्म रावनी
रोदसी इति तु लेखकभ्रमः ॥ ५७ ॥

शृङ्गसङ्गिचलचारुचामर
रत्नपल्ययनराञ्चितं वृषम् ।
श्वेतशैलमिव जङ्गमं शिवः
साम्यमूर्तिरधिरुह्य निर्ययौ ॥ ५८ ॥

पाण्डरे वृषभवाहने पुर-
श्चन्द्रमण्डल इवोदिते मति ।
पाणिपद्मपुटानि पश्यतां
पद्मवन्मुकुलतां प्रपेदिरे ॥ ५९ ॥

वार्यौषतविलासलास्यतो
विस्मितो बलभिदप्सरोगणैः ।
शाङ्करोत्सवमवेक्ष्य सादरं
चक्षुषां दशशतीमधन्ययत् ॥ ६० ॥

दिव्यमङ्गलतनुद्युतिच्छटा-
दूरितान्धतमसो नटेश्वरः ।
आरुरोह रथमार्यया सह
च्छाययेव सवितोदयाचलम् ॥ ६१ ॥

मेरुकूटमुत मेघमण्डलं
विद्युदुद्द्युति विमानमेव वा ।
इत्यतर्कि रथशृङ्गमुल्लस-
च्छुभ्रकेतनशतं हिरण्मयम् ॥ ६२ ॥

इन्द्रपूर्वकविमानमीश्वर-
श्चन्द्रकोटिसमशीतलाकृतिः ।
मन्द्रगीतमधिरुह्य मञ्जुनि-
स्वान्द्रभेरिवरतूर्यं सदोऽम्बरम् ॥ ६३ ॥

चारुचामरवितानतोरणे
चन्दनागुरुसुजातसौरभे ।
रत्नहेमरचिते महामणि-
स्तम्भराजिरुचिराजितोदरे ॥ ६४ ॥

लोलपुष्पसरलोलसपत-
द्भृङ्गडिम्भपटलेन वीप्सिताम् ।
इन्द्रनीलमणितोरणावलिं
सन्तत दधाति चित्सभान्तरे ॥ ६५ ॥

तैलदुग्धदधिसर्पिरैक्षव-
क्षौद्रकेरसलिलाम्बुसंप्लुतम् ।
शुद्धशङ्खसलिलाभिषेचन-
स्वच्छदिव्यतनुमुज्ज्वलांशुकम् ॥ ६६ ॥

गन्धसारघनसारकुङ्कुम-
क्षोदशोभिमृगनाभिचर्चितम् ।
हेमकुण्डलकिरीटमुद्रिका-
हारसारसकहंसकोज्ज्वलम् ॥ ६७ ॥

मल्लिकाबकुलबिल्वमालती-
चम्पकाब्जसरघाढ्यसौरभम् ।
स्वानुरूपशिवकामसुन्दरी-
नित्यशोभिनिजवामपार्श्वकम् ॥ ६८ ॥

व्याघ्रचर्मपरिधानवेष्टन-
व्यालदष्टमणिमुण्डमालिकम् ।
किंचिदुन्मिलितकिंकिणीकन-
रम्यपादधृतदिव्यनूपुरम् ॥ ६९ ॥

अद्भुतां यवनिकात्मिकां नृणा-
मादितश्चिरपमायं दीक्षिताः ।
ब्रह्मरूपमुपयाति यद्दर्शया-
मामुपोपनिषदं महेश्वरम् ॥ ७० ॥

श्रवणमननध्यानैः शश्वत्समाहितचेतसः
परमशिवमध्यक्षीकुर्वन्ति यं परमर्षयः ।
तमिह दयया शिष्याभ्यद्रिजमनजरञ्जितं
ददृशुरमिता लोका दिव्याकृतिं गुहलोचनैः ॥

भव हर शिव शंभो पार्वतीश त्रिनेत्र
प्रमथनुत नटेश प्रार्थितं नः प्रदेहि ।
पटुतरमिति शब्दं प्राणिनां रत्नसालाः
प्रतिरवमिषतो नु प्राहुरप्राणिनोऽपि ॥ ७२ ॥

श्रीमद्वैदिकमार्गखेलनकलाशुद्धान्तरङ्गः सुधी-
रद्वैतामृतलाभनिर्भरनिजानन्दानुभूतिः सताम् ।
गोप्ता मेटकरीकुलैकतिलको गोपालभूपालकः
काव्येऽस्मिन्क्रमशो नटेशविजये सर्गं व्यधात्सप्तमम् ॥

इति सप्तमः सर्गः ॥



# अष्टमः सर्गः ॥



सरसी शिवकामसुन्दरी-
करुणेवात्र पुरे गरीयसी ।
जयति प्रथिता जगत्त्रये
शिवगङ्गेति शिवप्रदा नृणाम् ॥ १ ॥

नवपद्मपदनीलवेणिका
दलदिन्दीवरदीर्घलोचना ।
धृतपत्रकुचावतिप्लुते
पुरि देव्याः परिचारिकेव या ॥ २ ॥

परिगृह्य तरङ्गबाहुभिः
शिवनिर्माल्यदलानि सादरम् ।
स्वयमर्पयतीव सन्ततं
हसदावर्तविलोचनेषु या ॥ ३ ॥

जनिमृत्युदुरध्वजाङ्घ्रिक-
क्रमविच्छेदकलापटीयसा ।
यमदूततिर्यदूर्मिका-
पवमानेन बलान्निरस्यते ॥ ४ ॥

पुरुहूतपुरातिशायिनो
नगरस्यास्य पुनर्निरीक्षितुम् ।
मणिदर्पणमण्डलीव या
निहिताधिक्षिति भाति निर्मला ॥ ५ ॥

महतस्तटगृध्रमण्डला-
न्मधुधाराभिपतो विनिःसृता ।
अमलामवगाह्यतेऽन्वहं
शुनदी यां द्रुतमात्मशुद्धये ॥ ६ ॥

धृतपातकभङ्गदीक्षया
श्रितकल्याणसमर्पणोत्कया ।
यमभीतिकया यया सदा
निजमूर्त्येव निवेद्यते शिवः ॥ ७ ॥

निजलोकगतो विराट् परा-
ऽसर ऐरंमदमेत्य साधकः ।
निजधामनया निमज्जने
ननु यस्यास्तनुते नमस्क्रियाम् ॥ ८ ॥

जलकेलिषु यत्र बालिका-
गलद्धारच्युतरत्नमालिका ।
बलिसद्मनिवासिभिर्ध्रुवं
भ्रियते मूर्धसु भोगिनां वरैः ॥ ९ ॥

कलशीतनयेन चूषितं
मरुवाहव्यवहेन दूषितम् ।
रघुवीरशरेण शोषितं
धुरि यस्या जलधि कथं स्तुमः ॥ १० ॥

यदि जातु यदृच्छया मना-
गपि यस्यां मनुजो निमज्जति ।
निमिषे निरयार्गलात्तदा
द्रुतमुन्मज्जति कम्बुसोद्भवः ॥ ११ ॥

इदमद्भुतमग्रतोऽपि यो
भवसिन्धौ किल यत्र मज्जति ।
तमवेक्ष्य बुधा वदन्त्ययं
भवसिन्धौ न निमज्जतीति यत् ॥ १२ ॥

सकृदप्यवगाहनान्नृणां
सहसा पङ्कहरे यदम्भसि ।
अवमज्ज्य जनोऽस्तु निर्मलः
कथमास्ते धृतकालिमा गले ॥ १३ ॥

शिवशब्दमुदीरितं नृभिः
स्वयमभ्यस्य यदम्बुगाहिभिः ।
दिशि दिश्यनुवादिनः शुका
दलयन्त्यर्कजकिंकरोद्धतिम ॥ १४ ॥

परिमज्ज्य यदम्बुनि प्रगे
परितः पद्मपरागपिञ्जरम् ।
पतिमागतमीक्ष्य भामिनी
परनारीपरिरब्धमूहते ॥ १५ ॥

परमेश्वरभावनोन्मुखै-
र्भसितालङ्कृतभालभूमभि ।
यदुपान्तिकमण्डपालयै-
र्यतिभिर्ब्रह्मपुर न गण्यते ॥ १६ ॥

दलिते सति यत्तटीजुषा
दहरोपासनया हृदम्बुजे ।
अवतीर्ण इवालिमण्डलो
हृदि गङ्गाभ्रमरो विराजते ॥ १७ ॥

धृतगोपुरदीपसञ्चय
प्रतिबिम्ब निशि वीक्ष्य यत्पय ।
तटसुप्तसमुत्थितो नभ.
स्फुटतार मनुतेऽपि दुर्दिने ॥ १८ ॥

रविगोपुरयुग्मयो-
रनुबिम्बावमले यदम्बुनि ।
अवलोक्य मुहूर्तमन्यत-
भ्रमनादेव जनोऽप्यपगच्छति ॥ १९ ॥

क्वचनालिकुलान्धकारिते
यत देशेऽतिविभेति कुत्रचित् ।
नवकोकनदारुणाकृते
रमते यत्र रथाङ्गयोर्युगम् ॥ २० ॥

अघमर्षणसूक्तशंसिना-
मनिशं यत्सलिलावगाहिनाम् ।
मणिमण्डपभित्तिमानव-
प्रतिमाश्छान्दयति प्रतिध्वनिः ॥ २१ ॥

कलहंसकुलाकुलीकृतैः
कमलैः कीर्णपरागकेसरैः ।
कृतकार्मुककौतुकाः प्रगे
कमलिन्यो विलसन्ति यद्गताः ॥ २२ ॥

कमले कमले कृताटनो
मधु विन्दन्मधुपः स्वसच्छलात् ।
फलमस्त्यटवामसंशयं
पुरुषाणामिति यत्र शंसति ॥ २३ ॥

नटराजरथोत्सवे तदा
ननु तस्या नवपाथसस्तटे ।
मणिमण्डितमण्डपेऽभव-
न्महति ब्राह्मणभोजनक्रमः ॥ २४ ॥

पुरुषोऽधिकृतः पुरोधसा
प्रवणेनाक्षतपात्रपाणिना ।
अनुगेहमटन्महीसुरा-
न्निभृतात्मा न्यमन्त्रताशितुम् ॥ २५ ॥

शुचयोऽथ जनाः शुभौदनं
विविधव्यञ्जनसूपपूपकम् ।
अपचन्नतिमात्रसौरभ-
प्रसभामन्त्रितभूसुरव्रजम् ॥ २६ ॥

पुरुषः स तदा पदे पदे
कुसुमास्तरणकोमलेऽमले ।
सलिलोक्षणशीतले तले
ह्यमतोऽवेशयदुद्विजान्द्विजान् ॥ २७ ॥

विबुधान्विहिताङ्घ्रिशोधना-
न्मणिपीठेषु निवेश्य मञ्जुषु ।
कुशलान्परिवेषणक्रमे
स्वजनानादिशदेष सत्वरम् ॥ २८ ॥

दृढवेष्टितदिव्यवासस-
श्चलचामीकरचारुकुण्डलाः ।
परितस्तरिरे प्रियं नृणां
कलयन्तः कदलीदलानि ते ॥ २९ ॥

अभिघार्य सलीलमादितो
नवमुक्तामणिजालनिर्मलम् ।
अदिशन्नधिपात्रमोदनं
मृदुमन्योन्यमसक्तमूष्मलम् ॥ ३० ॥

अपि सूपमपारसौरभं
कनकप्रार्थितकामनीयकम् ।
शशिबिम्बसमीपवर्तिभू-
सुतसच्छायमदुस्तदन्तिके ॥ ३१ ॥

कुचहैमघटद्वयद्रव-
द्घनकस्तूरिकया कयाचन ।
लवणं प्रददानया नृणा
ललितं सत्क्षणमाददे मनः ॥ ३२ ॥

कुचकुड्मलकान्तिचौर्यतो
दलितं पश्यत दिव्यजम्भलम् ।
इति तद्रुचलीव हेलया
निदधे काचन नीलकुन्तला ॥ ३३ ॥

गलितं सुदतीकराञ्चला-
त्किमु गारुत्मतमङ्गुलीयकम् ।
इति खण्डितहारवल्लिका-
दलमुपैक्ष्यत भर्जितं जने ॥ ३४ ॥

परिकर्मविशेषयोगतः
स्पृहणीयामतिकोमलाकृतिम् ।
मृदती स्मननृतिकाधरा
प्रथमस्त्रैहयत भोक्तुमुत्सुके ॥ ३५ ॥

स्ववशं विदधे न केवलं
स्वदनीयैः कदलीशलाटुभिः ।
अपि चाटुभिरुल्लसद्रसै-
र्मनुजानां हृदयं मृगेक्षणा ॥ ३६ ॥

हितमारिचहिङ्गुजीरकं
सह सामुद्रनिशाम्यसर्षपम् ।
अहरद्भुतमाज्यसंप्लुतं
जनचित्तानि पदार्थजालकम् ॥ ३७ ॥

स्तनसीम्नि च दत्तदृष्टिभि-
र्युवभिः काचन हेमविग्रहा ।
बहुलं परिवेषयन्त्यपि
प्रतिषिद्धा न भृशं बुभुक्षुभिः ॥ ३८ ॥

पनसाम्रकपित्थगोस्तनी-
कदलीजाम्बवनालिकेरदाः ।
अपि तेऽधरबिम्बवञ्चना-
स्तरुणीर्वीक्ष्य तदा निशश्वसुः ॥ ३९ ॥

मणिपात्रपुटे मनोहरे
   घृतधारा कनकालुकामुखात् ।
तपनादिव कान्तिधोरणी
   पतिता बालरसालपल्लवे ॥ ४० ॥

चषकेऽधिकचारुणि व्यभा-
   न्मधुराख्या मधु दत्तमुत्तमम् ।
अरविन्द इवातिसुन्दरे
   महनीयं मकरन्दजालकम् ॥ ४१ ॥

मकरोदधिपायसौदनो
   विविधव्यञ्जनजालसेवितः ।
पटुकोणपरीतपङ्कज-
   च्छदनिद्राणसितच्छदभ्रमम् ॥ ४२ ॥

अथ पात्रमपूरि पर्पटै-
   र्वटकैर्लड्डुकमोदकोत्तरैः ।
अतिमात्ररसैरपूपकै-
   र्मृदुगोधूममयैश्च मण्डकैः ॥ ४३ ॥

परितः परिषिच्य भाजनं
मृदुहस्ताब्जमरन्दितोदकान् ।
अवलोक्य जनान्स हर्षितो
हृदि दध्यावधिकार्युमापतिम् ॥ ४४ ॥

अधिकारिगिराद्भुतं मना-
गथ सर्वत्र सुभोज्यमस्त्विति ।
उपरि स्फुरदुत्तरोत्तरं
व्यरमच्छास्त्रविदां मिथो वचः ॥ ४५ ॥

न बहिर्निजपात्रतो रसाः
पतितेति प्रत्ययसाधका इव ।
मणिपात्रगतं महाजना
घृतमग्रे स्वकरेण पस्पृशुः ॥ ४६ ॥

प्रचलत्तरुणीपदद्वयी-
चलमञ्जीरघणात्कृतिर्जनान् ।
प्रतिपङ्क्ति पदे पदेऽधिका-
र्युपचारोक्तिवदुत्सुकान्व्यधात् ॥ ४७ ॥

अमृतं घुरि हेमभाजने
फलयन्ती विदधे करे नरान् ।
कनदिन्दुकलेव कामिनी
निजसंदर्शनमात्रनिस्तृपान् ॥ ४८ ॥

सरलीकृततालवृन्तया
गुरुलक्ष्यस्तनदर्शनीयया ।
बहिरेव कयापि कामिनां
नुनुदेऽन्तस्तु न हन्त संज्वरः ॥ ४९ ॥

रसलेहपयोरसायनैः
परमान्नैरपि भूरिशर्करैः ।
परिपूरितभाजना जने-
रचला कल्पलतासमस्फुरत् ॥ ५० ॥

परिवेषयती पयः स्वयं
नवपीयूषनिषद्धसौहृदम् ।
निरतं निजरूपसंपदा
विधुशङ्कापि सपूरमोहयत् ॥ ५१ ॥

मसृण शरदिन्दुमण्डल
प्रतिमल्ल वरवर्णिनी परा ।
धुरि मूर्तमिवात्मन स्मित
दधिखण्ड दिशति स्म माहिषम् ॥ ५२ ॥

परिपक्कपित्थसौरभ
पटुजम्बीररसार्द्रकाञ्चितम् ।
परिपीय च तक्रमन्तत
प्रशशसु सुहिता प्रभु जना ॥ ५३ ॥

अधिविप्रमुख यथार्पितै
र्गिरिशोऽभ्येति मुद घृतौदनै ।
न तथाभिमुखे निपातितै
पशुसोमाज्यपयश्चरुव्रजै ॥ ५४ ॥

परिशोधितपाणिपल्लवा
वरचित्रासनवेदिकास्थिता ।
प्रणमन्तमधिक्षिति प्रभु
परमाशीर्भिरवर्धयन्बुधा ॥ ५५ ॥

क्रमुकैरथ खण्डितैर्नवैः
सिततांबूलदलैः सुगन्धिभिः ।
कुसुमैर्घनसारचन्दनै-
रपि विप्रानधिकार्यपूजयत् ॥ ५६ ॥

विबुधास्तु विशेषतोऽर्चिता
मणिहेमाम्बरमञ्जुभूषणैः ।
भुवनेऽखिलभुक्तिमुक्तिदं
प्रशशंसुः परमेश्वरोत्सवम् ॥ ५७ ॥

इत्थं महोत्सवपरंपरयैधमाने
रम्ये चिदम्बरपुरे रचिताग्निहोत्राः ।
सन्तः सभाधिपतिदर्शनशान्ततापाः
स्वाध्यायशर्म दधति श्रुतिशास्त्रपाठैः ॥ ५८ ॥

हेमसभ्यमहिमदुरहंकारविकारदम्भै-
र्योग्यां गुम्भैर्वसुपनिषत्सौरभैर्व्याघ्रपुर्याम् ।
पारानर्घमधीतमनघं महासूत्रं यतीन्द्रा
व्याकुर्वन्ति त्रिमुनिवचनगुम्फदृष्टितानि सत्याः ॥

अहमिदमवलोक्यात्यद्भुतं तिल्वदेशे
शिवचरितमुपाग्रां शीघ्रमाख्यातुकामः ।
त्रिदिवमिति वदन्तं तुम्बुरं हृष्टचेता
गुरुरथ बहुमेने गीर्भिराशीर्मयीभिः ॥ ६० ॥

त्रिदशालय एव देवलोक-
स्त्रिसहस्रालय एष तिल्वदेशः ।
अनयोः क्व तुलाप्सरःसु रम्भा
दिवि सैकात्र तु ताः परःसहस्रम् ॥ ६१ ॥

मरणाज्जननाच्च मुक्तिरुक्ता
स्मरणादप्यपरत्र सा हि गौणी ।
इह दर्शनतः किलेरिता सा
सकलश्रुत्यविरोधिनीति मुख्या ॥ ६२ ॥

दृष्ट्वा रथोत्सवदिनेषु दिशामधीशा-
नष्टौ समागतवतो ध्रुवमानुपूर्व्यात् ।
प्रापुः पुरीं स्वयमपि प्रमदाय शंभोः
स्वस्वोचितां षडृतवो दधतः समृद्धिम् ॥ ६३ ॥

श्रीमद्वैदिकमार्गमेलनकलाशुद्धान्तरङ्गः सुधी-
रद्वैतामृतलाभनिर्भरनिजानन्दानुभूतिः सताम् ।
गोप्ता मेटकरीकुलैकतिलको गोपालभूपालकः
काव्येऽस्मिन्क्रमशो नटेशविजये सर्गं चकाराष्टमम् ॥

अष्टमः सर्गः ॥



# नवमः सर्गः ॥



चन्दनाचलपटीरकुटीर-
स्पन्दमानपवमानगभीरैः ।
अध्वनीनजनमानधनैका-
गारिकैरजनि कैश्चिदहोभिः ॥ १ ॥

पञ्चमेन निनदेन दिशन्ती
पञ्चतां पथिकलोकवधूनाम् ।
पञ्चसायकयशांसि पठन्ती
संचचार पिकसंततिरुच्चैः ॥ २ ॥

मन्मथोपनिषदां महनीयं
कोकिलेषु कथयत्सु रहस्यम् ।
स्थाण्डिलैरपि जनैस्तरुणीनां
केवलं विलुलुठे कुचसीम्नि ॥ ३ ॥

पल्लवानि परिदश्य लतानां
कोमले नदति कोकिलयूनि ।
भावविद्युवजनः प्रमदानां
पर्यकूजदधरान्परिचुम्ब्य ॥ ४ ॥

पुष्पमास इति भृङ्गवधूटी-
स्त्वङ्गजोत्सव इति ह्रदिनीति ।
कुञ्जगेह इति कोकिलवाणी-
रुत्तरोत्तरमभूत्तुवभाग्यम् ॥ ५ ॥

मारवीरममधिष्ठितमाद्य-
द्गन्धवाहगजराट्पदलग्ना ।
शृङ्खलेव दिवि षट्पदमाला
चञ्चलाम्बगतिपाद शिशिञ्जे ॥ ६ ॥

षट्पदाभ्रवलयं सविरावं
पल्लवाङ्गुलितलैः परिधिन्वन् ।
मोहनाय जगतां मधुयोगी
पुष्परेणुभरभस्म चकार ॥ ७ ॥

चञ्चरीककुलझंकृतिमन्त्रै-
मोचयन् झडिति मानपिशाचम् ।
कालमान्त्रिकवरः खलु कान्तै-
र्यौवतानि सह योजयति स्म ॥ ८ ॥

मारुतो भुवनमारणविद्यां
प्रेतनायकपुरे समधीत्य ।
आगतः प्रयुयुजेऽध्वगवृन्दे
प्रागहो बत परीक्षितुमेनाम् ॥ ९ ॥

पाण्ड्ययौवतपयोधरभार-
स्फारहारपटलीषु विलुठ्य ।
मारुतोऽजनि हिमो मलयाद्रौ
लेलिहानरसनेन कदुष्णः ॥ १० ॥

फुल्लहल्लकपरागमरागे
वाति शीतलमरे वनवाते ।
पादपाः सपदि पर्यघकम्प-
न्साधु साध्विति किल स्वशिरांसि ॥ ११ ॥

मन्दवातशिशुना व्रततीनां
गृह्णता किसलयाङ्गुलिजालम् ।
चक्रमे मुखरषट्पदमाला-
किङ्किणीततिभृता गहनान्ते ॥ १२ ॥

स्नानमज्जमधुवारिषु वल्ली-
मण्डपेषु जपकर्म वनेषु ।
पत्रपुष्पहरणं पथिकाङ्के-
ष्वर्पिकार्यमनिलेन वितेने ॥ १३ ॥

अम्बरोदरविचरागमनङ्ग-
स्यन्दने चलति चन्दनशैलात् ।
पाटलध्वजपटाञ्चललक्ष्मीः
प्रत्यपादि नवपल्लवजालैः ॥ १४ ॥

सौधमालकपुरे मुरवार्त
दर्शनीयविभूतानतभारम् ।
गन्धसारगिरिगन्धवहोऽसौ
गाहते युवतिदुःस्यमन्दम् ॥ १५ ॥

चारुपल्लवचयैः शयनीयं
पुष्परेणुपटलैः पटवासम् ।
कुर्वती रहसि कुञ्जलताभू-
त्केलिषु प्रियसखी कुलटानाम् ॥ १६ ॥

बालचूततरुमूलतलेषु
स्यन्दमानमकरन्दहिमेषु ।
कामकेलिरभसोदितखेदाः
शेरते स्म हरिणा हरिणीभिः ॥ १७ ॥

कम्पितानि सहकारतरूणां
दाक्षिणात्यपवनेन दलानि ।
कृत्तपान्थगलशोणितदिग्धा-
न्याञ्जजान्यसिदलान्यनुचक्रुः ॥ १८ ॥

मञ्जरीषु कृतमालतरूणां
पुञ्जरीतिमधिगम्य परागैः ।
पिञ्जरीकृततनुभ्रमरालिः
कुञ्जरीरमणगण्डमदेऽस्नात् ॥ १९ ॥

वन्यसीमनि वसन्तनरेशो-
　रध्वनीनदलनादसृगार्द्राः ।
विस्मृता इव नखा विरेजुः
　किंशुकस्य मुकुलाः कुटिलाग्राः ॥ २० ॥

मान्मथी मरकतोपलकोशा-
　म्लानमुष्टिरुचिरा छुरिकेति ।
कापि चञ्चुगतकिंशुकपुष्पा
　भीतभीतमयत शुकी पथिकेन ॥ २१ ॥

मानिनीदुरभिमानशिलाना-
　भेदनाय किमय प्रसवेषो ।
स्वर्णटङ्क इति मदापदाग्र
　चम्पकस्य मुकुलेन चकाशे ॥ २२ ॥

प्राप्तया वनभुवि प्रथमं तु
　संगम झटिति चम्पकवल्ल्या ।
मानिवान्यत कथं पवमानो
　गुप्ततानय कथ मधुपो वा ॥ २३ ॥

माधवीमुकुलवान्तमधूली-
सेकयोगसुलभाङ्कुरजालम् ।
व्यत्यषिक्त मधुभिर्वकुलस्तां
युज्यते ह्युपकृतावुपकारः ॥ २४ ॥

अङ्गनाचरणताडनलीला-
माप्नुवन्सबहुमानमशोकः ।
प्रेक्षितुं तदिव भागमुपेतैः
पल्लवैरभिनवैः परिवव्रे ॥ २५ ॥

मङ्क्ष्वकल्प्यत मधूकतरूणां
मण्डलेषु मधुदुर्दिनितेषु ।
कोरकौघकरकोत्करवर्षि-
ष्वध्वगैः पिककृतेऽशनिबुद्धिः ॥ २६ ॥

कर्णिकारकुसुमं मरुताभ्रे
कृष्यमाणमलिकीर्णमलासीत् ।
ग्रस्तमध्वगकुलभयहेतो
राहुणेव रविबिम्बमकाले ॥ २७ ॥

दर्शनीयतिलकोऽपि विपुण्ड्रः
   श्राव्यनव्यकलकण्ठरवोऽपि ।
अङ्कुरत्कुरबकोऽयमनेहा
   मधपोऽप्यजनि मध्वनुकूलः ॥ २८ ॥

पक्वदाडिमफलं परिदीर्णं
   पाटलत्वगनुबन्धि बबन्ध ।
पट्टकञ्चुकितमारपुरंध्री-
   पद्मरागमणिकञ्चुकबुद्धिम ॥ २९ ॥

नालिकेरकुहलीनवधूली-
   धोरणी भ्रमरधूमशिखाभे ।
षट्पदम्बुदधियोन्नतकण्ठ
   नीलकण्ठनिवहेन निरैक्षि ॥ ३० ॥

पाटुके रटति कोकिलयूनि
   द्रोहिणि स्वनति दुर्मदभृङ्गे ।
वाति पातकिनि वातकिशोरे
   जातु पान्थजनताश्वसितुं कः ॥ ३१ ॥

भृङ्गकीरपिकसारसकृत्वि-
रभूषितेऽधिमधु भूरुहषण्डे ।
पान्थलोकपशुसंज्ञपनार्थं
धीमता मनसिजेन दिदीक्षे ॥ ३२ ॥

सत्यमेव परपुष्टसमूहः
कालकूटविषकल्पितदेहः ।
अन्यथा कथमदःकृतमोहः
पान्थको भुवि पतेद्विगतेहः ॥ ३३ ॥

उन्मिषत्कुचयुगां कुसुमार्थं
निष्कुटेषु नितरां वलमानाम् ।
कुञ्जगेहमनु कोरकिताशो
नायको नववधूं विचकर्ष ॥ ३४ ॥

पाटलैः किसलयैः पवमानैः
शीतलैः सुरभिभिः सुमनोभिः ।
कोकिलैः कलरवैर्मधुभिश्च
स्वादुभिः सुहितमिन्द्रियजालम् ॥ ३५ ॥

मन्मथोत्सवविधौ मणिदोला-
   रोहणे सुमनसां लवने च ।
उत्सुको युवतिभिर्युवलोको
   व्यत्यलङ्घत सुखेन वसन्तम् ॥ ३६ ॥

चामराधिपगताङ्कपराध्य-
   रुक्कामरारिकुलगात्रमहाभाः ।
धूसराः स्वरजसाथ सुमानां
   केसरा ददृशिरेऽधिशिरीषम् ॥ ३७ ॥

कोकिलं कचन संभृतमौनं
   वीक्ष्य हन्त मुकुलैर्विकसद्भिः ।
मल्लिका परिजहास महान-
   व्याहृतिं न किमनेहसि यासि ॥ ३८ ॥

फेनखण्डपतितोऽधिपयोधि
   स्वेदबिन्दुरिव षट्पदडिम्भः ।
मल्लिकामुकुलभाजनमध्ये
   मोदकृद्भिरदिमिर्मधुरैर्भिः ॥ ३९ ॥

भारयुद्धगलितं निशि कैश्या-
न्मल्लिकाकुसुमदाम विभाते ।
कुञ्जधाम्नि कुलटा किमुदीक्ष्य
व्यालकञ्चुकभिया व्यगलद्द्राक् ॥ ४० ॥

मारमत्तगजमस्तकभाग-
स्यन्दमानमदशीकरशङ्काम् ।
कुर्वतीभिरबलाकुचकुम्भे
घर्मवारिकणिकाभिरजृम्भि ॥ ४१ ॥

काञ्चनाद्रिमपि घर्ममहिम्ना
संभृतद्रवमवेत्य समन्तात् ।
युक्तमेव कुचसीम्नि युवत्या
स्वेदजन्म बुबुधे बुधसङ्घः ॥ ४२ ॥

सुभ्रुवामतनुत श्रमतोयै-
र्दूपितस्तिलकितो मृगनाभिः ।
नासिकाग्रनवमौक्तिकलग्न-
श्चम्पकभ्रमरसंगतिशङ्काम् ॥ ४३ ॥

उन्नमय्य वदन युवतीना-
मुत्सुकाश्तिलकनेन युवान ।
घर्मशीकरकदर्थितयत्ना,
प्रापुरम्रधरपानकपाले ॥ ४४ ॥

मल्लिकामुकुलजालविमोक-
प्रेमशालिनि पृथग्युवयुग्मे ।
मध्यभाजि मदनोत्सव आसी-
त्प्रौढगाढपरिरम्भणदोष ॥ ४५ ॥

भूरितापभरित मणिमञ्चे
पर्यशेत मिथुन पृथगेव ।
हारयष्टिभिरयष्टि यथेष्ट
कूलमुद्गमकुचद्वयमासि ॥ ४६ ॥

तालवृन्तवातदुर्विनिवार
तापमाशु तस्माय तदण्या ।
आचचाम हरिचन्दनपङ्की-
धूसर कुचदुकूलमधीर ॥ ४७ ॥

हस्तवर्ति हरिचन्दनसिक्तं
तालवृन्तमलसत्तरुणीनाम् ।
भिक्षितुं वदनबिम्बविलासं
चन्द्रमण्डलमिव स्वयमेतम् ॥ ४८ ॥

स्वर्णवर्णसुभगं सुदृगङ्गं
स्विन्नमुन्नतकुचं कृतिना द्राक् ।
हन्त चेटयुपहृतेन जलार्द्रो
वायुनोपजुगुहे धुरि भर्तुः ॥ ४९ ॥

स्नानतो मृगदृशः स्तनकुम्भ-
स्तत्क्षणं विरलतोयकणाङ्कः ।
कामुकेन कचधूननकाले
प्रेमगाढमुरसा परिरेभे ॥ ५० ॥

शीतमंशुकशिखाश्चितमग्रे
बिभ्रती नवपयोधरकुम्भम् ।
शालिका न तु परं सलिलानां
पालिकाप्यहृत पान्थमनांसि ॥ ५१ ॥

तृष्णयाधरधृताञ्जलिरूर्ध्वं
   दत्तहस्तपुटे धुतमौलिः ।
पानतः प्रथममेव युवत्या
   पर्यहासि पथिकोऽम्बु ददत्या ॥ ५२ ॥

चण्डभानुकरचण्डिमभूम्ना
   दीपितेऽध्वगजनो दिनमध्ये ।
वृक्षमूलकृतवेदिषु वृन्दं
   वृन्दमाशु परिपीय पयांसि ॥ ५३ ॥

पक्षिणो गिरिनदीषु पयांसि
   ग्रीष्मभानुकिरणक्वथितानि ।
पातुमक्षमतया प्रतिकूलं
   दीनदीनमकुजन्त तृषार्ताः ॥ ५४ ॥

नातपक्षयकृशानुशिख्यानि
   गौरगर्भमशिलाफलकानि ।
भावदम्बुरुहराशिचपट्-
   ग्रीषिणां प्रतिदिनं विपिनेषु ॥ ५५ ॥

प्रौढदावदलनस्फुटिताद्रि-
मावखण्डहतिविह्वलगात्राः ।
मन्दमन्दमचलन्मिहिराश्वा
दिव्यतः किल दिनेऽजनि दैर्घ्यम् ॥ ५६ ॥

पद्मबान्धवकरैः परिभूतो
लोहितेक्षणपुटोऽद्रिलुलायः ।
तूर्णमाविलयति स्म तदीयैः
सेवितं समवगाह्य तटाकम् ॥ ५७ ॥

वारि भूरि परिपीय वसूनां
नायको निजकरैरतिमात्रम् ।
तद्वमन्निव तदा मृगतृष्णा-
व्याजतः प्रतिदिशं विलुलोके ॥ ५८ ॥

सर्वथैव पवनाशनसङ्घ-
श्चामयोगसमये समुदीते ।
पिप्पलेषु विबुधा भुवि रूढ्या
जह्निरे चलदलव्यवहारम् ॥ ५९ ॥

कापि वारणगणस्तरुमूले
हस्तशीकरकिरोऽधिकपोलम् ।
शङ्क्यते स्म दवथुं लघु हन्तुं
मेघसङ्घ इव मन्त्रयमाणः ॥ ६० ॥

शुद्धया च सुमनोगणमध्ये
श्लाघ्यया च सुरभिः शुभजात्या ।
आपगासु शुचिराचमनेऽपां
व्यापृतो यदि किमत्र विचित्रम् ॥ ६१ ॥

अम्बु शीतमजनिष्ट तदानीं
काञ्चनादपि कथंचन मृग्यम् ।
नीरदानमत एव निदाघे
स्वर्णदानशतसंमितमाहुः ॥ ६२ ॥

वल्लभासुवदने प्रति याभिः
पर्यदीव्यत पतङ्गशिखाभिः ।
अङ्गके पुनरभूयत ताभि-
र्धूमनिःश्वसितधूसरिताभिः ॥ ६३ ॥

चत्वरे न न चतुष्पथदेशे
वेदिकासु न न वा विशिखासु ।
सद्मगस्तु समदृश्यत धारा
यत्र गेहसविधे युवलोकः ॥ ६४ ॥

भाललोचनसुदर्शनपाण्यो-
र्नैव चेच्छ्वशुरगेहनिवासः ।
गाढतापबहुलः कथमेष
ग्रीष्मवासरगणः क्रमणीयः ॥ ६५ ॥

वासराणि कदलीवनवीथ्या-
मत्यगाद्युवजनोऽम्बुविहारैः ।
चन्द्रकान्तभुवि चन्द्रमयूखैः
शर्वरीश्च समुदच्छति तापे ॥ ६६ ॥

प्रमदवनसमीरः पाटलीगन्धलिप्सा-
परिमिलदलिवृन्दामन्दझङ्कारभेदैः ।
कनकसदसि नृत्यं कुर्वतश्चन्द्रमौले-
रनुगुणमपराह्णे स्वैरमारब्ध गीतम् ॥ ६७

आषाढे किल मासि तत्र नगरे दृष्टः पुनर्मल्लिका-
गन्धान्धभ्रमरावलीकृतहरिद्वारस्फुरत्तोरणे ।
सिद्धान्तो नटनायकस्य पुरतः श्रीगन्धमारोदकं
सोत्साहं त्रिसहस्रदीक्षितवराभ्यक्तः शताङ्गोत्सवम् ॥

श्रीमद्वैदिकमार्गपालनकलाशुद्धान्तरङ्गः सुधी-
रद्वैतामृतलाभनिर्भरनिजानन्दानुभूतिः सताम् ।
गोत्रामेटकरीकुलैकतिलको गोपालभूपालकः
काव्येऽस्मिन्नवमं नटेशविजये सर्गं चकाराद्भुतम् ॥

इति नवमः सर्गः ॥



# दशमः सर्गः ॥

---

ग्रीष्मकाननकृशानुशिखोत्थैः
कज्जलैर्मलिनितं समभूत्किम् ।
संशयं विदधतीति समेषां
प्रावृडाविरभवद्घनदभ्रा ॥ १ ॥

प्राक्कदम्बसुरभिः पवमानः
पाकशासनधनुर्ननु पश्चात् ।
दक्षिणाभिनवतोयधरश्री-
रुत्तरा च तटिदुन्मिषति स्म ॥ २ ॥

शारदिग्विजयमङ्गलयात्रा-
वादित्रैः किल गभीरगभीरम् ।
शैलवारणशिरोभिरुदूढै-
र्ध्वने जलददुन्दुभिवृन्दैः ॥ ३ ॥

वारिदस्मरभटा वलमाना
दिक्षु धूनिततटिद्गुणवेत्राः ।
प्रोषितान्निजगृहं प्रति यूनो
द्रावयन्त इव धीरमगर्जन् ॥ ४ ॥

नीलसौधशिखराण्यनु पश्य-
न्त्यात्मनः सरणिमध्वगयूना ।
कौतुकादुपवने कनकाङ्गी
केकिनेव ददृशे घनविद्युत् ॥ ५ ॥

वीचिभिर्जलनिधौ विपुलाभि-
र्दूरदर्शिततिरोहितरूपा ।
चारुविद्रुमलतेव चकाशे
चञ्चला जलदसंकुलितेऽभ्रे ॥ ६ ॥

कालिकामभि कृतारभटीका-
मन्तरेऽभ्रमदसोऽधिकहर्षात् ।
नीलकण्ठमवलोक्य नदन्तं
प्रद्रुमाधमभजत्फणिराजः ॥ ७ ॥

कालमेघनिनदै. सनिनादं
वारिबन्धमधिगम्य बलाकैः ।
मेदुरा मदकणा इव मुक्ताः
प्रापुवन्प्रथमबिन्दव ऊर्वीम् ॥ ८ ॥

संपतत्तृषितचातकपोत-
त्रोटिकोटिदलचूषितशेषाः ।
शीकराः प्रथमत. किल चेल-
क्नापमापुरवनीं घनमुक्ताः ॥ ९ ॥

वारिवाहनिवहे बलहन्तु-
श्चापयष्टिरचिरेण चकाशे ।
इन्द्रनीलशिखरीन्द्रनितम्बे
गैरिकद्रवझरीव गलन्ती ॥ १० ॥

अस्फुटद्बहिरजाण्डकटाहो-
द्घट्टने मणिमयं फटकार्धम् ।
विक्रमेषु किमु विष्णुपदे य-
द्दृष्टमिन्द्रधनुरित्यवशिष्टम् ॥ ११ ॥

ग्रीष्मसोष्मघनगोमयपङ्कैः
   प्रावृषा पदमलिप्यत विष्णोः ।
रङ्गवल्लिरपि रत्नरजोभि-
   स्तन्यते स्म धनुराकृतिरत्र ॥ १२ ॥

मेघमण्डलमहोदधिमध्ये
   सन्वता मणिधनुर्मयसेतुम् ।
कालदाशरथिनावधि काण्डै-
   कृष्णपङ्क्तिवदनो हृतशीतः ॥ १३ ॥

कर्षणस्यदघनक्षुभिताम्बु-
   स्फाटलाहिपतिभोगपरीतम् ।
आशु मन्दरसमस्मरदब्धौ
   स्वे धनुर्वलयितो घनसङ्घः ॥ १४ ॥

धार्तराष्ट्रभयदायिनि कृष्णे
   सिंहनादिनि घने सति गयः ।
अर्जुने गृहशिखण्डिनि धारा-
   भीष्म उग्र उदभिद्यत काण्डैः ॥ १५ ॥

मर्दनं बत शुचेर्मलिनात्मा
काल एष कृतवानिति मत्वा ।
मानसं प्रति नु मङ्क्षु पलायां-
चक्रिरेऽतिशुचयः कलहंसाः ॥ १६ ॥

आहृतासु पयसाम्बुजवाटी-
ष्वाततासु सरणिष्वतिपङ्कैः ।
आवृतासु च हरित्सु घनौघै
राजहंसगतयो न रराजुः ॥ १७ ॥

हंससन्ततिरलक्षि वलक्षी
क्रौञ्चशैलकुहरं प्रविशन्ती ।
निर्गलद्विमलनिर्झरिणीभि-
र्निर्विशेषमटवीषु निषादैः ॥ १८ ॥

दीनचातकशिशौ दयनीये
क्रन्दति स्नुतपयःकणजालः ।
प्रावृषो धृतपयोधरनामा
तावदभ्रनिवहस्तनति स्म ॥ १९ ॥

वातविस्तृतघनाघनवर्षा-
कामिनीकचभरे परिफुल्ला ।
मल्लिकास्रगिव मञ्जुबलाका-
मालिकातिमहती विलुलोके ॥ २४ ॥

जृम्भिते सति जलोदयकाले
यत्र पूर्वमुदलासि मरालैः ।
तारकाभिरपि तत्र बकौघै-
र्ज्योतिरिङ्गणगणैश्च चकाशे ॥ २५ ॥

अम्बरे सति पयोधरभारे-
णावृते तव पयोधरभारः ।
अम्बरेण कथमावृत इत्या-
कर्पि यौवतकुचांशुकमिष्टैः ॥ २६ ॥

चातकेषु भुवनं स्वनिषेवि-
ष्वर्पयन्वितरणित्वमगाधः ।
केतकीद्रुभिरसेवि घनोऽसौ
कुट्मलच्छलकृताञ्जलिबन्धैः ॥ २७ ॥

उद्यते जगदुपेन्द्रकुमारे
जेतुमस्य जयसाधनमिन्द्रः ।
वाहनं वरधनुश्च ददत्स्वं
हन्त कोपमपि मूर्तममुञ्चत् ॥ ३२ ॥

चञ्चलायतकशे जलवाहा-
व्यापके नदति धीरमुदारम् ।
शैलसीम्नि शिखिमाणवकानां
शुश्रुवे कलकलः श्रवणीयः ॥ ३३ ॥

नीलमेघनिवहेन दशाना-
मावृतेऽपि हरितामवकाशे ।
उल्ललाम तरणेरुडुपस्या-
प्यप्सु मण्डलमहो तटिनीनाम् ॥ ३४ ॥

अस्तमेति सवितास्य तटाकाः
कुर्वतेऽस्य कमलाञ्जलिबन्धम् ।
श्रोत्रियैरिति घनस्थगितेऽभ्रे
सायकर्मसमयो निरणायि ॥ ३५ ॥

कामिनीकलितनिर्दयकण्ठा-
श्लेषसञ्जनितशर्मविशेषैः ।
शारदञ्जलधरो लघुवर्षा-
वासरं सुकृतिभिर्विललङ्घे ॥ २६ ॥

अम्बरं परिदधत्यवदातं
हंसपङ्क्तिभिरलंकृतपार्श्वम् ।
आययौ शरदद्भ्रसिताभा
लालिताभ्युदितराजकरेण ॥ २७ ॥

विष्टपं शरदृतोर्वशचन्द्रा-
गच्छजप्रमुखदत्त किमस्मै ।
लक्ष्मकेतबलमब्जिजमुद्र
चन्द्रबिम्बमिषपात्रमनघम् ॥ २८ ॥

चारुभिर्विरहिताश्चपलाभि
पाण्डुतामिव घनाः प्रतिपन्नाः ।
दिक्षु तूललघवो वलमाना-
श्चिक्षिपुर्दृशमिव विधुरत्वात् ॥ २९ ॥

शम्पया कनकशृङ्खलदाम-
च्छद्मया परिवृतो जलदः खे ।
निःस्पृहः शरदि नीलमहोक्ष-
व्याजतोऽधिगु वलक्षदति स्म ॥ ४० ॥

सप्तपर्णकुसुमेषु समीरः
संनिपत्य मधुगन्धिषु सद्यः ।
निष्पतन्गिरिगुहासु निषण्णै-
रभ्यधाव्यत रुषा हरिडिम्भैः ॥ ४१ ॥

गन्धसिन्धुरकपोलतलस्पृ-
क्पुण्डरीकमुखपर्यटनोत्कः ।
बाणकोटिषु पतन्नपि नालि-
र्विव्यथे विरहिदुर्विधिपाकान् ॥ ४२ ॥

षट्पदालिररुणाम्बुजषण्डे
मेदुरा युवमनोमृगहत्यै ।
दारुणस्मरकिराततताया-
वागुरेव दवसीम्नि विरेजे ॥ ४३ ॥

सिन्धवः स्वपतिचूषणशीले
स्फीततेजसि मुनौ सति भीताः ।
अम्बुजाञ्जलिमकुर्वत कार्श्यो-
द्राजसंस्कृतितां रहयन्तः ॥ ४४ ॥

प्रावृजस्खलतया बहुरात्रं
प्राप या न तटिनी प्रतिकर्म ।
निर्मला शरदि सा निजकेशा-
न्शैवलान्यपयांस शोधयति स्म ॥ ४५ ॥

पुण्डरीककुलभूरिविलासा-
श्यामनीलवनराजिसमेता ।
तावदद्रिषु तटी तटिनी च
द्वे परस्परतुलामलभेताम् ॥ ४६ ॥

दन्तिदन्तशकलैरिव दीप्तैः
कैरवैरुडुगणैरपि कीर्णम् ।
शारदं सरसिकृत्य स नूनं
कं च खं च कविराड् सवर्णम् ॥ ४७ ॥

कामकुण्डलितकार्मुकचक्र-
केङ्कृतिभ्रमकरं गह्नान्ते ।
कूजितं मदकलं कुररीणा-
मातनान पथिकानधिकार्तान् ॥ ४८ ॥

दैविकी मम तिरस्कृतिरामी-
रकुप्यमात्रगुणिनीति तुलास्थे ।
प्रत्ययार्थमिव भास्वति पद्मि-
न्युन्नमय्य मुखमुच्छ्वसितिं स्म ॥ ४९ ॥

प्रावृषेण्यदिवसे प्रतिवेदे
संमदं स किल षण्मुखवाहः ।
शारदेऽह्नि तु चतुर्मुखवाहः
कस्यचिद्भवति कश्चन कालः ॥ ५० ॥

भूषणानि पथि शिञ्जितभीत्या
द्राग्विमुच्य तटिनीं निशि यान्त्या ।
हंसके नदति हन्त सशङ्कं
स्वाङ्घ्रियुग्ममभिसारिकयैक्षि ॥ ५१ ॥

राजहंस इति पार्थमि राका-
चन्द्रबिम्बमभिसृत्य मरालम् ।
वञ्चिताथ वरटा निजनाथे
न स्म विश्वसिति जातु यथार्थे ॥ ५२ ॥

वाजपेयविहितावभृथानां
यज्वनामुपरि हंसयुवानः ।
आतपत्रमवलोक्य गृहीतं
हंस इत्यनुनदं दिवि नेदुः ॥ ५३ ॥

यद्वदन्यत्र शुचिर्द्विजवृन्दे
शुद्धमानसगतिः सुनदीष्णः ।
शीतवातसहनोऽपि च हंसो
वर्णसंकरवशात्तु शितो न ॥ ५४ ॥

यामघोपलमयीव वितर्दि
चन्द्रकान्तमणिपीठमसेता ।
शिश्रिये शिशिरता सरिदावि-
र्भेकता च सुगिरा द्विजपङ्क्त्या ॥ ५५ ॥

स्पर्धितं विरुरुधे हि मिथस्त-
त्खञ्जरीटमिथुनं घटमानम् ।
येन सर्वयुवमोहनदात्रा
सूचिकाजनि निधेः शरदुर्व्याम् ॥ ५६ ॥

कन्दलत्कुमुदकाननखेल-
द्राजहंसरमणीचरणानि ।
दुग्धसिन्धुसरसोदरवल्ला-
द्विद्रुमाङ्कुरविलासमपुष्णन् ॥ ५७ ॥

शारदेषु दिवसेषु समानं
पुण्डरीकपटलेन पयोधौ ।
उन्मिमेष दृगुभय्यपि विष्णोः
पुण्डरीकनयनो हि स कालः ॥ ५८ ॥

सप्तपर्णमभिसृत्य सकामं
मञ्जरी परिवहन्मदगन्धम् ।
स्कन्धदेशविनिवेशितशुण्डा-
काण्डया चिरमवर्ति करिण्या ॥ ५९ ॥

संचरत्सरसि मन्ततखेल-
त्कामिनीकुचतटीघुसृणाक्ते ।
मल्लिकाक्षमिथुनं चरणास्ये
राजहंसयुगरीतिमधत्त ॥ ६० ॥

रक्तवारिरुहरेणुरजोभि-
र्धूसरा धुरि मिथो पटमाना ।
मारदेवमहिता इव मल्ल्या
षट्पदा मलिनद दिशि चेरु ॥ ६१ ॥

शुद्धराजलघट पुलिनान्ते
न्यस्य कल्पितनदीजलकेल्या ।
मुग्धया इह यदीक्ष्य मरालं
घुघुरे निजघटः प्लवतीति ॥ ६२ ॥

पुण्ड्रपर्वगलितस्फुटमुक्ता-
वारणाकिरिलया वनगोप्त्रः ।
इक्षुशाकटजनस्य सरण्या
कालपीनमभजन्त कर्षयित्र ॥ ६३ ॥

अध्वग कलमपालिकयामे
दर्शितेऽपि पथि तद्गतचेता ।
स्पृष्टवानिव पदौषधिभेद
बभ्रमीति बत ता परित स्म ॥ ६४ ॥

चास्खलीषि न च शक्ष्यसि गन्तु-
मस्ति सिद्धिरिति कापि भुजङ्गम् ।
लोलदृष्टिमरुणलघुभोगि-
ग्राहिणीव पथिक यवगोप्त्री ॥ ६५ ॥

प्रस्थितस्य परित क्रममाणा
दिग्जयाय मदनस्य तुरङ्गा ।
श्यामला कलममौञ्जि समेता
जृम्भिता वनशुका अवतेरु ॥ ६६ ॥

घोषितै कलमकाननगोप्त्या
प्रस्थितान्वत शुकान्समगृह्णन् ।
पल्लवैश्च कुसुमै प्रहियन्त्र-
स्थाणवस्तदुपगीतिमुदस्थै ॥ ६७ ॥

प्रोच्य मासमवधिं प्रसवर्तो-
र्योषिति प्रचलितः पथि वन्ये ।
गोपिकाध्वनिषु कोकिलबुद्ध्या
हा वसन्त इति कश्चिदमुह्यत् ।। ६८ ।।

तत्र तत्र नवदर्भसमूहाः
पुष्पितास्त्रिभुवनं जिजिगीषोः ।
रेजिरे रजतकेसरपङ्क्त्या
राजिता रतिपतेरिव कुन्ताः ।। ६९ ।।

दिग्जयाय चरमामिह राज्ञा
हस्तिभिर्हरितपट्टपताकाः ।
दीर्घशैलकदलीदलपाली-
विभ्रमं विदधिरे ध्रियमाणाः ।। ७० ।।

राजहंसरजनीकरकाश-
स्तोमकैरवकुलच्छलतः स्वाम् ।
अग्रजे किरति कीर्तिमगच्छ-
त्मा शरच्छरदयोगिषु भूत्वा ।। ७१ ।।

वायुवह्निजलखानि वसन्त
ग्रीष्मवार्दिनशरत्सु किमृद्धिम् ।
प्रापुरित्यृतुयुगे परिशिष्टे
भूरजांसि परिवृद्धिमगच्छन् ॥ ७२ ॥

अम्बरे विधिरयां परमाणू-
न्व्यमृतातपयुते हिमदम्भान् ।
अग्निसूक्ष्मुरत एव बुधानां
माविवर्णपरिक्लृप्तिरिदानीम् ॥ ७३ ॥

हैमनेषु दिवसेषु यतोऽभू-
द्गौश्चिराय धृतजीवनगर्भा ।
विप्रकीर्णहिमघर्मकणौघा
पाण्डिमानमत एव बभार ॥ ७४ ॥

दिव्यहंसनिवहेऽभ्रवटिन्यां
शारदेषु दिवसेषु विहृत्य ।
छिन्नपक्षकुलकम्पिनि पेतुः
शीकरा हिममिषेण समन्तात् ॥ ७५ ॥

जारदष्टमधरं पिदधाना
काऽपि नव्यकुलटा कुलटाभिः ।
पृच्छते स्वपतये व्रणहेतुं
शीलिता हिम इतीति वदन्त्य ॥ ८० ॥

इत्वरी यत निशासु हिमानी-
दुर्निरीक्ष्यगमनाऽपि विभाते ।
शाद्वलेषु समसून्यतुरागैः
प्रस्तुतैरिव बहिः पदपातैः ॥ ८१ ॥

हास्तिकं दिनमुखे बहिरेत्य-
स्मन्तत स्थपुटिते हिमपिण्डैः ।
प्राङ्गणेऽपि पदमेकमनीशं
कर्तुमुद्धतकरं रटति स्म ॥ ८२ ॥

बालिनेव शिशिरेण विदूरं
द्राविता रवितनूज इवोष्मा ।
ऋश्यमूकमिव सोऽपि तदानीं
प्राप यौवतपयोधरदुर्गम् ॥ ८३ ॥

वीटिकाद्विपटिकाप्रतिसीरा-
गर्भगेहमृगनाभिहसन्तीः ।
संनिधाप्य सुदतीकुचदुर्गे
संश्रितैर्विमुमुचे शिशिरार्त्तैः ॥ ८४ ॥

सायमातपदयामिशिखाभि-
र्व्याहृता निशि हिमैर्वनराजिः ।
कुन्दपुष्पकपटेन विभाते
पाण्पमिन्दुपटलं विससर्ज ॥ ८५ ॥

इत्थं दुरन्तहिमवर्षिणि जृम्भमाणे
काले वियोगिजनजीवविघातकाले ।
कान्ताकुचोष्मकवलीकृतशीतगर्वा
निद्रासुखान्यनुभवन्ति निशि स्म धन्याः ॥ ८६ ॥

बकुलमुकुलशालाशेषमात्रं तदानीं
प्रतिदिशमवलोक्य प्राणभृद्भ्यामपुर्याम् ।
अमनुत शिवरात्रावर्चितुं भूसुरेन्द्रै-
रखिलमपि विहीनं पत्रपुष्पाङ्कुरौघम् ॥ ८७ ॥